यावयवत्वात् 'आदेशप्रत्यययोः' इति षत्वम् । तथाहि 'शीङो रुट्' इति प्रत्ययावयवझकारादेशस्य अतो रुट् इति विहितोपि रुट् समुदायभक्तत्वेन सार्वधातुकग्रहणेन गृह्यते इति शेरत इत्यत्र 'शीङस्सार्वधातुके' इति गुणः प्रवर्तते । 'ष्टुना ष्टुः' षकारटवर्गाभ्यां युक्तयोः सकारतवर्गयोः यथासंख्यं ष्टुरिति तकारथकारयोः टकारठकारौ । निमित्तयोर्यथासंख्यं 'तोष्षि' इति षकारे परे तवर्गस्य ष्टुत्वनिषेधान्न भवति । ध्वमि 'विभाषेटः' इति मूर्धन्यविकल्पः ॥

व्यत्यभविष्ट । व्यत्यभविषाताम् । व्यत्यभविषत । व्यत्यभविष्ठाः । व्यत्यभविषाथाम् । व्यत्यभविढ्वम् । व्यत्यभविषि । व्यत्यभविष्वहि । व्यत्यभविष्महि । सिचीड्गुणावादेशषत्वानि यथायोगं ष्टुत्वं च । 'आत्मनेपदेष्वनतः' इति झस्यादादेशः । तकारस्य प्रयोजनाभावान्नेत्त्वम् । ध्वमि षत्वस्य पूर्वत्रासिद्धत्वात् 'धि च' इति सलोपे गुणः । इणः परस्मादिटः परत्वात् विभाषेटः' इति मूर्धन्यविकल्प उदाहार्यः । व्यत्यभविष्यत । इत्यादि लङ्वत् ॥

अथ भावकर्मणोर्लकाराः प्रदर्श्यन्ते ॥ तत्र 'भावकर्मणोः' इत्यनयोः लस्यात्मनेपदमेव । 'सार्वधातुके यक्' भावकर्मवाचिनि सार्वधातुके धातोर्यगिति लटि लोटि लङि विध्यादिलिङि च यक् । अन्यत्र सार्वधातुके स्यादिभिरस्य बाधः । लिडाशीर्लिङोस्तु आर्धधातुकत्वान्न प्रसङ्गः । यकः कित्त्वान्न गुणः । भूयते, भूयताम्, अभूयत, भूयेत, भक्ता । अत्र प्रत्ययेन कर्तुरनभिधानात्तृतीया । 'कर्तृकरणयोस्तृतीया' इति तिङ्कृत्तद्धितसमासैः अनभिहितयोरनयोस्तृतीयोच्यते । तत्र भावस्य युष्मदस्मदर्थाविशेष्यत्वात्प्रथमपुरुष एव । तत्राप्याख्यातेन स्वतः क्रियाया.

निवृत्तभेदाय। अभिधानादेकवचनमेव भवति—भवद्भ्यां, भवद्भिः त्वया युवाभ्यां युष्माभिः मया आवाभ्यां अस्माभिः भूयत इति। भवन्तीत्यादौ तु प्रत्ययेन कर्तुरभिधानात् तत्कृतं बहुत्वम् ।।

भूयते मासः—

'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्। देशश्चाकर्मणाम्' ।।

इति मासादयोऽकर्मकाणां कर्माणि। तत्र कर्मणोभिधानात् कर्मणि द्वितीया न भवति। सा च तिङादिभिरनभिहिते विधीयते ।।

भूयते भवता मासम् इत्यत्र भावे लविधानात् कर्मणोऽनभिधानात् द्वितीया। ननु सकर्मकत्वात्कथं भावे लकारः? उच्यते—कालादिभिर्न कश्चिदप्यकर्मक इति तद्व्यतिरिक्तेन कर्मणाऽकर्मकाणां भावे लविज्ञानात्। कथं तर्हि मासे लः, अकर्मकाणां भावकर्त्रोर्लविधेः? उच्यते—एवंविधानां भावकर्मकर्तृषु लविज्ञानात्। तथोक्तम्—'कालाध्वनोः' इत्यत्र मासादिकर्मणि भावे च लकारं प्रस्तुत्य 'प्राकृतमेवैतत्कर्म यथा कटं करोति शकटं करोति' इति, पुनश्च तत्र 'यदि प्राकृतमेवैतत्कर्म अकर्मकाणां भावे लो भवतीति भावे लो न प्राप्नोति' इति चोदयित्वा 'अकर्मकाणामित्युच्यते। न च केचित्कालभावादिभिरकर्मकाः। त एवं विज्ञास्यामः क्वचिद्येऽकर्मका इति। अथवा—येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति तेनाकर्मकाणां न चैतेन कर्मणा कश्चिदप्यकर्मकः। अथवा—यत्कर्म भवति न च भवति तेनाकर्मकाणां, न चैतत्कर्म क्वचिदपि न भवते' इति ।।

अनुभूयते सुखम् इत्यादौ संवेदनाद्यर्थत्वात् भुवः संवेद्यादिभिरपि सकर्मकत्वात्कर्मण्येव लः ।।

भूयते । भूयन्ते इत्याद्युदाहार्यम् ॥

तथा भूयताम् । अभूयत । भूयेत मासः इत्यादि च ॥

लिटि न विशेषः । अत्र केचिदाहुः—'भवतेरः' इत्यत्वं श्तिपा निर्देशात् भावकर्मणोर्नेति । अयमस्यार्थस्य कथं प्रतिपादक इति त एव प्रष्टव्याः । तस्य तु प्रयोजनं यङ्लुकि मन्त्रविषये आमभावे लिट्परत्वे सत्यत्वनिवृत्तिः ॥

भविता । भाविता । 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इत्यजन्तानां हनादीनां च धातूनामार्धधातुकेषु भावकर्मविषयेषु स्यादिषु वा चिणीव कार्यं इट् च स्यात् इत्यभिधानात् चिण्वत्पक्षे वृद्धिः ॥ इहेड्विधानमनिडर्थं ण्यन्तार्थं च । स्यसिजादीनामार्धधातुकत्वाव्यभिचारेऽपि तेन विशेषणं सीयुडर्थम् । तेन सार्वधातुके विध्यादिलिङि सीयुटि चिण्वत्त्व स्याभावः । एवं स्यसिच्सीयुड्विषये द्वैरूप्यमुदाहार्यम् ॥

भविष्यते । भाविष्यते ॥

अभविष्यत । अभाविष्यत ॥

अभावि । अभाविषाताम् । अभविषाताम् ॥

भविषीष्ट । भाविषीष्ट इत्यादि । लुङ्लिङोर्ध्वमि चिण्वत्पक्षे 'विभाषेटः' इति मूर्धन्यविकल्पनाच्चातूरूप्यं नेयम् । लुङि तशब्दे 'चिण्भावकर्मणोः' इति चिण्विधानात् च्लेश्चिण्[1] । ततः 'चिणो लुक्' इति तशब्दस्य लुक् ॥

---

1 ना—च्चिण्विधानात् सिज्लोदाहृतः ।

अथ कर्मकर्तोच्यते—'कर्मवत्कर्मणा तुल्यक्रियः'। 'कर्तरि शप्' इत्यतः कर्तृग्रहणमनुवृत्तं प्रथमान्तमिह विपरिणम्यते। इह कर्म न पारिभाषिकं तेनात्यन्तविलक्षणेन क्रियायाः सादृश्यायोगात्। नापि क्रियामात्रं यया कयाचन [1] क्रियया क्रियायाः सादृश्याव्यभिचारात्। अतः कर्मेह तत्स्था क्रिया, अनया तुल्यक्रियः कर्ता कर्मणा तुल्यस्तत्कार्याणि लभत इत्यर्थः। तानि च यगात्मनेपदचिण्चिण्वद्भावाः। एकस्मिंश्च प्रयोगे कर्मणा तुल्यक्रियस्य कर्तुरसम्भवात् कर्मत्वकर्तृत्वे प्रयोगभेदेन ज्ञेये। यद्येवं 'घटं भावयति' इत्यत्र कर्मस्था क्रियोत्पत्तिः, अस्ति च तया तुल्यक्रियत्वं घटो भवतीत्यत्र कर्तुरिति यगादि कस्मान्न भवति? अर्थस्वभावादेवास्य योगस्य धातुविषयत्वे सिद्धे 'धातोः' इत्यनुवृत्तिसामर्थ्याद्विभक्तिविपरिणामेन सप्तम्यन्तं विवक्षितैकत्वं विज्ञायत इत्येकस्मिन् धातौ कर्मणा तुल्यक्रियस्य कर्तुः कर्मवद्भावात्; इह तु धातुर्भिद्यते। एवं च कर्मव्यापारोपसर्जनकर्तृव्यापारार्थो धातुर्यत्र सौकार्यातिशयप्रतिपादनाय कर्मव्यापारमात्रे वर्तते सोऽस्य विषयः संपन्नः। ततश्च 'शत्रुमभिभवति' इत्यत्र न्यग्भवनोपसर्जने न्यग्भावने वृत्तो भवतिर्यदा न्यग्भवनमात्रे वर्तते तदा **अभिभूयते शत्रुस्स्वयमेव** इति यगात्मनेपदे भवतः॥

नन्वत्र कर्मस्था क्रिया न्यग्भवनं सैव कर्तृस्थापीति क्रियाभेदाभावात् कथं भेदनिबन्धनं सादृश्यमिति चेन्न, कर्मकर्त्रवस्थाभेदेन भिन्नकारकगतत्वेन भेदोपपत्तेः॥

नन्वत्रातिदेशेन यगादिवत् द्वितीया कस्मान्न भवति। न च 'अनभिहिते' इति निषेधः, अस्य कार्यातिदेशत्वात् अत्र च

---

[1] यथाकथंचन इति मुद्रितकोशे।

तदधिकाराभावात् । उच्यते—'व्यत्ययो बहुलं लिङ्याशिष्यङ्' इति संहितया सूत्रपाठात् लिङीति द्विलकारको निर्देशः, तत्रैकं लग्रहणमनुवर्तते । तच्चेह षष्ठ्यन्तं सत् तदन्तत्वं प्रयोजयति, कार्यं प्रतीति चाध्याह्रियत इति लान्तकार्यविषयत्वादतिदेशस्य द्वितीयायाश्चातथात्वादप्रसङ्गः । एवं च कर्माश्रयाः कृत्यादयोपि न भवन्ति ॥

नन्वभिभूयमानो देवदत्तो यज्ञदत्तमभिभवतीत्यत्रापि सकर्मकत्वात् कर्मवद्भावः प्राप्नोति, अत्र हि यज्ञदत्ते कर्मणि दृष्टं न्यग्भवनं न्यग्भावयितरि देवदत्ते च कर्तरि दृश्यते यदसौ न्यग्भवन् न्यग्भावयति । नैष दोषः, इह कर्मणा तुल्यक्रिय इति कर्मस्थया क्रियया तुल्यायाः क्रियायाः प्रसङ्गात्कर्तुश्च क्रियापेक्षत्वात् प्रत्यासत्त्या तदपेक्षयैव कर्तुः कर्मवद्भावविज्ञानात् । इह च न्यग्भवनं न कर्तृत्व उपयुज्यते किन्तु न्यग्भावनमेव, अन्यग्भवतोपि न्यग्भावने कर्तृत्वसम्भवात् । वत्करणात् स्वाश्रयेण कर्मकर्तृत्व[1] निबन्धनो भावे लकारोपि भवति—**अभिभूयते शत्रुणा स्वेनैव** इति[1] तेन शत्रोर्द्वितीया न भवति । सर्वत्र कर्मवदुदाहरणानि ॥

लुङि तशब्दे तु 'अचः कर्मकर्तरि' इति च्लेश्चिणादेशविकल्पनात् पक्षे सिचि तस्य च पूर्ववद्वा चिण्वदिटि तत्पक्षे वृद्धौ—**अभ्यभावि । अभ्यभाविष्ट । अभ्यभविष्ट** इति त्रैरूप्यम् । स्वाश्रये भावे लकारे तु 'चिण्भावकर्मणोः' इति चिणेव—**अभ्यभावि शत्रुणा स्वेनैवेति** ।

अथ पुरुषविषये किञ्चिद्विचार्यते—युष्मदस्मदन्येषु सह विवक्षितेषु 'त्यदादीनि सर्वैर्नित्यम्' अन्यैस्सहवचने त्यदादीनि शिष्यन्ते मिथस्तु

---

[1] मु—स्वाश्रयाकर्मकत्व ।

पराणीति शिष्यमाणाभ्यां युष्मदस्मद्भ्यां अशिष्यमाणार्थाभिधानेऽपि स्वार्थापेक्षौ मध्यमोत्तमावेव भवतः, न तु शिष्यमाणाशिष्यमाणरूपस्यार्थस्य युष्मदस्मदर्थान्यत्वेन शेषत्वात्प्रथमः, यत्र युष्मदस्मदी समानाधिकरणे न स्तः स शेष इत्युक्तत्वात् । तेन—देवदत्तश्च त्वं च, स च त्वं च युवां भवथः । देवदत्तश्च स च त्वं च यूयं भवथ । देवदत्तश्चाहं च आवां भवावः । देवदत्तश्च स च अहं च वयं भवामः इति । युष्मदस्मदोः सहविवक्षायां परत्वादस्मदा शिष्यमाणेन युष्मदस्मदर्थाभिधानेऽपि परत्वादस्मदर्थापेक्ष उत्तमो भवति —त्वं चाहं च आवां भवाव इति भवताऽपि युष्मदस्मदोः सहवचने तस्य पूर्वपाठाश्रयेण तयोरेव शेषे— भवांश्च त्वं च युवां भवथः, भवांश्चाहं चावां भवाव इति । सहविवक्षा च अनेकस्यार्थस्यैकगुणक्रियाभिनिवेशार्थं बुद्ध्या निरूप्यमाणस्य क्रिया-गुणद्वारेणान्योन्यापेक्षया समुदायभावमापन्नस्य सहभावेन वक्तुमिच्छा, उद्भूतावयवभेदत्वाच्च द्विवचनबहुवचने । असहविवक्षायां द्वैतं एक एव लकारोऽनेककारकार्थाभिधायी प्रतिकारकमावर्तते वेति । तत्राद्ये पक्षे युष्मदस्मदन्यानामशेषत्वाद्यथायोगं मध्यमोत्तमौ भवतः । तथा मध्यमोत्त-मयोर्युगपत्प्रसङ्गे परत्वादुत्तमः—त्वं चाहं च गच्छाव इति । पक्षान्तरे तु लाभिधेयतत्तत्कारकापेक्षया प्रथमादयो यथायोगं भवन्तीति न विवादः ॥

भवान् भवति, त्वं भवसि, अहं भवामि इति । अलि-ङ्गस्सम्बोधनैकविषयश्च युष्मदर्थः, भवदर्थस्त्वन्य इति तद्योगे प्रथमः । यदा त्वस्मात्सम्बोधनविभक्तिः तदा युष्मदर्थयोगात् मध्यमो भवति— हे भवन् भवसीति ॥

अतित्वं भवति अत्यहं भवति इत्यादौ त्वामतिक्रान्तो मामतिक्रान्त इत्यत्र 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति तत्पुरुषे

त्वमतिक्रान्तो येन अहमतिक्रान्तो येनेति 'अनेकमन्यपदार्थे' इति अनेकं सुबन्तं अन्यस्य पदस्यार्थे वर्तमानं समर्थं समस्यत इति बहुव्रीहौ वा अतिक्रमितुः प्राधान्यात्तस्यैव लान्तार्थविशेषणत्वात् न मध्यमोत्तमौ। यदा त्वतिशब्दः पूजितवचनः तदा 'स्वतीपूजायां' इति तत्पुरुषे युष्मदस्मदोरर्थस्य प्राधान्यात्तेन विशेष्यत्वात् अतित्वं भवसि, अत्यहं भवामि इति भवतः ॥

त्वद्भवति, मद्भवति इत्यत्र च्व्यन्तयोरेतयोस्त्वमिवाहमिवेति च स्वार्थारोपेण वर्तमानत्वादमुख्यार्थत्वात् 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायेन मध्यमोत्तमौ न स्तः। तथा हि—'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति कार्यात्मना अभूतस्य कारणस्य कार्यात्मना भावे विवक्षिते सम्पद्यमाने कार्यात्मना भवतिकर्तरि वृत्तात्प्राति-पदिकात् कृभ्वस्तियोगे च्विर्विधीयते। एतदुक्तं भवति—अभेदविवक्षया कारणवृत्तेः कार्यशब्दात् प्रत्ययः इति ॥

त्वत्कल्पो भवति मत्कल्पो भवति इत्यादावपि गौणार्थत्वाच्च न मध्यमोत्तमौ। तच्च. 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' सम्पूर्णता पदा-र्थानां समाप्तिः, किंचिन्न्यूनता ईषदसमाप्तिः. एतद्विशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् 'तिङश्च' इति तिङन्ताच्च स्वार्थे कल्पबादय इति प्रकृत्यर्थसदृशार्थान्तरवृत्तिभ्यो विधानात्। यदा तु कालान्तरदृष्टगुणेषद-समाप्तिविशिष्टस्वार्थवृत्तेः प्रत्ययः तदा न गौणार्थत्वमिति त्वत्कल्पो भवसि मत्कल्पो भवामि इति भवतः। त्वमेवेदानीं किंचिन्न्यूनगुणो भवसी-त्यर्थः। पूर्वत्र तु त्वत्सदृशोऽन्यो भवतीत्यर्थः ॥

अथ तिङन्तात्प्रत्ययाः प्रदर्श्यन्ते—'अतिशायने तमबिष्ठनौ' अतिशायनं प्रकर्षोऽभिभवः। एतदुपाधिकार्थवृत्तेः ङ्याप्प्रातिपदिका-

देतौ स्याताम् । तथा 'तिङश्च' इति तिङन्ताच्च । बहूनामेकस्य निर्धारणे चैतौ, 'द्विवचनविभज्योपपदे तरबीयसुनौ' द्वयोरर्थयोर्वचने विभज्ये विभक्तव्ये चोपपदे तरबीयसुनोर्विधानात् । तत्र 'अजादी गुणवचनादेव' इतीष्ठनीयसुनोर्गुणवचनादेव नियमात्तिङन्तात्तरप्तमपावेव । एतदन्तात् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' । किमादिभ्यो यो घः तदन्तादद्रव्यप्रकर्षे गम्यमाने आमुरित्यामुः । उकारो मकारस्यानन्त्यत्वे-नेत्त्वनिवृत्तये । इल्लुप्यते । तत्र 'स्वरादिनिपातमव्ययम्' 'तद्धि-तश्चासर्वविभक्तिः' इत्यसर्वविभक्तिमुक्तं तद्धितान्तं. 'कृन्मेजन्तः' इति मकारैजन्तकृदन्तं 'क्त्वातोसुन्कसुनः' इति त्वाद्यन्तं 'अव्ययीभावश्च' इत्यव्ययीभावश्चाव्ययम् । 'तरप्तमपौ घः' । तत्रामि परे 'यचि भम्' यकारादावजादौ च स्वादावसर्वनामस्थाने परतः पूर्वं भमिति घान्तस्य भसंज्ञा । इह स्वादिः 'स्वौजसमौट्' इत्यारभ्य कप्पर्यन्तः । घान्तस्य 'यस्येति च' इवर्णोवर्णयोरिति भसंज्ञानिमित्ते तद्धिते च परे लोपः इति लोपः—भवतितराम्, भवतितमाम् । तद्धिताश्च 'तद्धिताः' इत आरभ्य आपञ्चमपरिसमाप्तेर्वक्ष्यमाणाः प्रत्ययाः । आमन्तं 'कृत्तद्धितसमासाश्च' कृदन्तं तद्धितान्तं समासश्च प्राति-पदिकमिति प्रातिपदिकम्, कृतः समासाश्च वक्ष्यन्ते । प्रातिपदिकाच्च 'ङ्याप्प्रातिपदिकात्' 'स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्याम्भ्य-स्ङसोसांङ्योस्सुप्' इति विधीयमानेषु स्वादिषु पदत्वार्थमेकवचनं[1] सुः । तस्य च 'अव्ययादाप्सुपः' अव्ययाद्विहितस्यापस्सुपश्च लुगिति लुक् । स्वरादिषु 'आम्' इति पाठादव्ययत्वम्, आबिति टाप्डाप्चापः ॥

'प्रशंसायां रूपप्' प्रशंसा स्तुतिः एतदुपाधिकार्थात् ङ्याप्प्रा-

[1] मु— एकत्वार्थे ।

तिपदिकात् तिङन्ताच्च रूपप् स्यात्। स्वभावादेतदन्तं नपुंसकप्रथमैकवचनमेव। तस्य 'स्वमोर्नपुंसकात्' इति नपुंसकलिङ्गात्परत्वेन लुकि प्राप्ते 'अतोम्' इत्यम्भावे 'अमि पूर्वः' अकोमि परे पूर्वपरयोः पूर्वरूपमेकादेश इति पूर्वरूपत्वम्। तेन भवतिरूपं इत्यादि भवति। एवं कल्पबाद्यन्तादपि स्वभावान्नपुंसकात्स्वादि कार्यम्॥

'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच्। तत्र 'तिङश्च' इत्यनुवृत्तेः अस्यापि टेः प्रागज्ञातादिषु प्रागिवीयेष्वर्थेषु भवति। अकार उच्चारणार्थः। चकारः 'चितः' इती स्वरार्थः। तत्र हि 'चितस्सप्रकृतेः' इत्युच्यते[1]। भवतकि॥

अथ तिङोऽन्ये लादेशा उच्यन्ते—'लटश्शतृशानचावप्रथमासमानाधिकरणे' लटः शतृशानचावादेशौ नित्यं स्यातामप्रथमान्तेन चेत्सामानाधिकरण्यं भवति। तत्र शेषत्वादस्य लटः शतृ,[2] तस्य शित्वात्सार्वधातुकत्वे पूर्ववच्छबादयः। शत्रन्तस्य 'कृदतिङ्' इत्यतिङः तृतीयधात्वधिकारविहितस्य प्रत्ययस्य कृत्संज्ञाविधानात् कृदन्तत्वेन प्रातिपदिकत्वादविशेषेण स्वादिप्रसङ्गे कर्मत्वस्य विवक्षितत्वात् 'कर्मणि द्वितीया' इति द्वितीया। द्वितीयादिशब्दैः सुपां त्रिकाः पूर्वाचार्यप्रसिद्धयोच्यन्ते। तत्रापि 'सुपः' इति सुपस्त्रीणित्रीणि पदानि भूत्वैकैकशो यथासङ्ख्यमेकवचनादिसंज्ञानीति तिङ्वदेकत्वादौ क्रमेणैकवचनादि भवति। तत्रामौटोः 'सुडनपुंसकस्य' सुडितिप्रत्याहारेणादितः पञ्च वचनानि गृह्यन्ते। तान्यनपुंसकलिङ्गसम्बन्धीनि सर्वनामस्थानानीति सर्वनामस्थानत्वे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्। उगितामञ्चनां लुप्तनकारस्याञ्चतेः पूर्वमधातोरुगितः पश्चाद्धातोश्चास्मिन् नुमिष्यते।

---

[1] चरस्वरार्थः तत्र हि चित इत्युच्यते इति बहुषु पाठः। [2] मु-शता।

अञ्चतिग्रहणस्य उगितो धातोर्यदि भवति अञ्चतेरेव इति नियमार्थत्वात् अधातुग्रहणं अधातुभूतपूर्वार्थम् । नुम् मित्वात् 'मिदचोऽन्त्यात्परः' इत्येकत्र सन्निविष्टानामचामन्त्यादचः । 'नश्चापदान्तस्य झलि' अपदान्तयोर्नकारमकारयोः झल्यनुस्वारः इति नस्यानुस्वारः । 'अनुस्वारस्य ययि परसवर्णः'। स च 'स्थानेऽन्तरतमः' इति नासिक्यानुस्वारस्य तादृशो नकारः भवन्तं पश्य भवन्तौ पश्य । भवतस्तान् इत्यत्र शसि 'स्वादिष्वसर्वनामस्थाने' इति पूर्वस्य प्राप्तायाः पदसंज्ञायाः 'यचि भम्' इति भसंज्ञयाऽऽकडारीययाऽनवकाशया बाधात् 'झलां जशोऽन्ते' इति जश्त्वं न भवति ॥

कर्तृकरणविवक्षायां 'कर्तृकरणयोस्तृतीया'। उक्तः कर्ता । 'साधकतमं करणम्' क्रियाप्रसिद्धौ यत्कारकं कारकान्तरापेक्षया प्रकृष्टं विवक्षितं यद्व्यापारानन्तरं क्रियानिष्पत्तिर्विवक्ष्यते तत्करणम् । उक्तं च—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥
वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥
क्रियते येन येनैव तत्तत्करणमिष्यते ।
तेनाश्वेन रथेनेति[1]सिद्धं दीपिकयेति च ॥

इति । टायाः टकारः 'टाङसि' इति विशेषणार्थः । अन्यथा 'सुपां

[1] 'पदायाति' 'पधायाति' इत्यपिपाठौ ।

सुलुक्' इति विहितस्याकारस्यापि ग्रहणमापद्येत । **भवता तेन ।** **भवद्भ्यां ताभ्याम् । भवद्भिः तैः ।** हलादौ पदत्वाज्जश्त्वम् ।

संप्रदानविवक्षायां—' चतुर्थी संप्रदाने ' कृदाद्यनभिहित इति शेषः । ' कर्मणा यमभिप्रैति स सम्प्रदानम् ' ददातिकर्मणा करणभूतेन कर्ता यमर्थमभिप्रैति तदनिराकर्तृ प्रेरयितृ अनुमन्तृ वा कारकं सम्प्रदानम् । उक्तं च—

अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥

इति । दानं चेहापुनर्ग्रहणाय किंचिदुद्दिश्य स्वीयत्यागः । **भवते तस्मै ददाति । भवद्भ्यां ताभ्यां ददाति । भवद्भ्यः तेभ्यो ददाति ॥**

अपादानविवक्षायां अपादाने पञ्चमी ' ' ध्रुवमपायेऽपादानम् ' । सावधिकं गमनमपायः । तदुक्तम्—

संयोगभेदाद्भिन्नात्मा गमिरेव भ्रमिर्यथा ।
ध्रुवोऽवधिरपायोऽपि समवेतस्तथा ध्रुवः ॥

इति । अस्मिन् साध्ये यत् ध्रुवमेतदनाविष्टं तत्कारकमपादानम् । तथा हि—

अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥

इति । त्रिविधं चैतत् । यथाऽऽह—

निर्दिष्टविषयं किंचिदुपात्तविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते ॥

इति । तत्र प्रथमं धातुना अभिहितापायविषयं, द्वितीयं धात्वर्थाङ्गार्थत्वेन[1] अभिहितापायविषयम् । तृतीयं तु सामर्थ्यादिना प्रतीयमानापायविषयम् । भवतस्तस्मादागच्छति । भवतो मेघाद्विद्योतते विद्युत् । अत्र निस्सरणाङ्गे विद्योतने विद्युतिर्वर्तते । भवतस्तस्मादाढ्यतरः । अत्र प्रकर्षप्रत्ययसामर्थ्याद्विभागकरणतया प्रकर्षलक्षणा क्रिया प्रतीयते । अत्र अवधिविभक्तव्ययोरेकीकारो विभागस्तद्धेतुरपकर्षणं च बौद्धम् । तथा चाह—

बुद्ध्या समीहितैकत्वान्[2] पञ्चालान् कुरुभिर्यदा ।
पुनर्विभजते वक्ता तदाऽपायः प्रतीयते ॥

इति । तत्रतत्र ङसीत्यनुवादार्थौ ङकारेकारौ । विभागोपायः अस्मिन् साध्ये यत् ध्रुवमेतद्धेतुभूतक्रियानाविष्टं तदपादानमिति वा सूत्रार्थः ॥

शेषविवक्षायां 'षष्ठी शेषे' अनभिहित इति शेषः कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरेकहेतुः स्वस्वामिसम्बन्धादिः शेषः, द्विष्ठोप्यसौ सम्बन्धो गुणगत एव शब्देन प्रतिपाद्यत इति तस्मादेव षष्ठी, न तु प्रधानात् । तदुक्तम्—

द्विष्ठोप्यसौ परार्थत्वात् गुणेषु व्यतिरिच्यते ।

इति । तथा च वार्तिकमपि 'उक्तं पूर्वेण' इति । अस्यार्थः— प्रातिपदिकार्थसूत्रे 'पदसामानाधिकरण्ये उपसङ्ख्यानमधिकत्वात्' इति चोद्यस्य 'न वा वाक्यार्थत्वात्' इति सामानाधिकरण्यप्रतीतेः वाक्यार्थत्वेन पदसंस्कारवेलायामभावात् प्रातिपदिकार्थनिबन्धना प्रथमा यथा भवत्येवमत्रापि प्रधानगतसम्बन्धप्रतीतेर्वाक्यार्थत्वेन पदसंस्कारवेलायामभावात् न प्रसङ्गः

[1] म–धात्वन्तरार्थत्वेन । [2] मु–....नत्वान् ।

षष्ठ्या इति । परिहार[1]भाष्यं च 'अर्थरूपमेवैतदेवं जातीयकम्' इति ।
**भवतोऽस्य स्वम् , भवतोरनयोः, भवतामेषाम् ॥**

अधिकरणविवक्षायां— 'सप्तम्यधिकरणे च' चकाराद्दूरान्तिकार्थेभ्यश्च । 'आधारोऽधिकरणम्' कर्तृकर्मणोः क्रियाश्रयभूतयोः धारणाक्रियां प्रति य आधारस्तत्कारकमधिकरणम् । त्रिविधं चतत् । यदाह—

> कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् ।
> उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥
>
> औपश्लेषिकमेकं स्यात्तथा वैषयिकं परम् ।
> अभिव्यापकमित्येतत्त्रिधाऽधिकरणं मतम् ॥
>
> आस्ते कटे शकुन्तः खे तिले तैलं व्यवस्थितम् ।
> क्रमेणाधारभेदानामुदाहरणदर्शनम् ॥

इति । भवति कटे शेते, मेघच्छन्ने भवति खे बलाकाः, भवति तिले तैलम् । भवतोरनयोः, भवत्स्वेषु । प्रथमासामानाधिकरण्ये प्रथमासामानाधिकरण्याभावे च 'नन्वोर्विभाषा' इत्यतो विभाषानुवृत्तेर्विकल्पेन भवतः प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा भवन्नयम् । 'हल्ङ्याब्भ्यः' इति सुलोपः । तकारस्य संयोगान्तलोपः । तस्यासिद्धत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति विधीयमानो नलोपो न भवति । भवन्तौ तौ । भवन्तस्ते— जसो जकारोऽसन्देहेन विभक्तिस्वरूपप्रतिपत्त्यर्थः ॥

**भवत्तरः । भवत्तमः । भवद्रूपः । भवत्कल्पः ।** इत्यादौ तरबादि पूर्ववत् ।

---

[1] परिहरति इत्यपि पाठः ।

भवत्कः —'प्रागिवात्कः' 'इवे प्रतिकृतौ' इत्यतः प्रागितः परेष्वज्ञातादिष्वर्थेषु द्योत्येषु प्रातिपदिकात्क इति कः। तद्धितत्वान्न ककारस्येत्वम्। शत्रभावे भवतीत्यादि पूर्वमुक्तमेव ॥

अत्र तिङः स्थानिवत्त्वेन लट्त्वाच्छत्रादेशो न भवति, वाग्रहणस्य व्यवस्थितविभाषात्वविज्ञानात्, यदि हि स्यात् स्थानिवद्भावेन तिङन्तत्वात्तस्मात्परात् घात् 'किमेत्तिङव्यय' इत्यादिना आमुस्स्यात्; ततश्च भवत्तरां इति तृतीयमपि रूपं स्यात्।

असामानाधिकरण्ये खल्वपि भवत इदं भावतम्—'तस्येदम्' षष्ठीसमर्थात् ङ्याप्प्रातिपदिकात् सम्बन्धिन्यर्थे अण्. इति अण्। 'तद्धितेष्वचामादेः' इत्यादिवृद्धिः ञिति णिति तद्धिते परेऽङ्गस्याचामादेरचो वृद्धिरिति। इयं च 'अत उपधायाः' इति ञिति णिति प्रत्ययमात्रे परेऽङ्गस्योपधाया अतो विधीयमानां वृद्धिमपवादत्वाद्बाधते। न च भवत इत्यस्य देवदत्तादिविशेषापेक्षत्वादस्तीहापि सामानाधिकरण्यमिति वाच्यम्। तर्हि सापेक्षत्वात् अस्मात्प्रत्यय एव न स्यात्। 'समर्थः पदविधिः' इतीह शास्त्रे पदविधिः समर्थपदाश्रय इत्युक्तत्वात्। इदमप्युदाहरणम्—भवतो भक्तिर्भवद्भक्तिः इति। 'षष्ठी' षष्ठ्यन्तं समर्थेन वा समस्यत इति समासः। 'सुपो धातुप्रातिपदिकयोः' इति तद्धितान्तसमासप्रातिपदिकयोरन्तर्भूतस्य सुपो लुक्।

अत्र केचित्—लडिति वर्तमाने 'लटश्शतृशानचौ' इति पुनर्लड्ग्रहणात् 'नन्वोर्विभाषा' इति भूते विहितस्यापि लटोऽप्येतावादेशौ भवत इति। एतद्भाष्यवार्तिकयोर्नोक्तं, वृत्तिकारस्य च नेष्टम्। यदाह—'लडिति वर्तमाने पुनर्लड्ग्रहणात् क्वचित्प्रथमा सामानाधिकरण्येऽपि भवति इति ॥

'संबोधने च'। शतृशानचाविति शेषः। आभिमुख्यकरणं सम्बोधनम्, तच्च स्वभावात्क्वचित्कार्ये विनियोगार्थम्। यदाह—

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।

प्राप्ताभिमुख्यो ह्यर्थाऽऽत्मा क्रियायां विनियुज्यते ।। इति ।

हे [1]सुखमनुभवन् वर्धस्व ।।

'लक्षणहेत्वोः क्रियायाः'। लक्षणं चिह्नम्, हेतुः कारणम्। क्रियाया लक्षणहेत्वोर्वर्तमानाद्धातोः लटश्शतृशानचौ स्याताम्। शयनमनुभवन् यवनो भुङ्क्ते। अत्र शयनानुभवनं यवनभोजनस्य लक्षणम्, शुश्रूषुर्भवन् विद्यामधिगच्छति. अत्रापि शुश्रूषाभवनं विद्याधिगमस्य हेतुः। योगद्वयमिदं प्रथमासमानाधिकरणे नित्यार्थम्। प्रथमा च 'सम्बोधने च' इति सम्बोधनाधिकप्रातिपदिकार्थे विहिता ।।

'माङ्याक्रोशे'। आक्रोशः शपनम्, अस्मिन् गम्यमाने माङ्युपपदे शतृशानचौ भवतः। मा भवन्। माङि लुङि प्राप्ते अस्मादेवादेशवचनाल्लडनुमीयते। सुखमनुभवन् इत्यादौ 'कर्तृकर्मणोः कृति' इत्यनयोः कृद्योगे विधीयमाना षष्ठी न भवति, 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति लादियोगे प्रतिषेधात्, ल इति शतृशानचौ, कानच्, क्वसुकिकिनौ चोच्यन्ते। उ इत्युवर्णान्ताः कृतः उकः प्रत्यय एव। अव्यय इति 'कृन्मेजन्तः' 'क्त्वातोसुन्कसुनः' इत्युक्ता अव्ययकृतः। 'क्तक्तवतू निष्ठा'। खलर्थः—खल् युच्। तृन् इति 'पूङ्यजोश्शानन्' इति शानन्नादयस्तृन्निति तृन्पर्यन्तः प्रत्याहारेणोक्ताः। प्रत्याहारश्च 'लटश्शतृ' इति तृशब्दस्य तृनो नकारेण। सुखस्यानुभवन् इति प्रयोगः शेषलक्षणया षष्ठ्या। अत्र षष्ठीसमासः 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन'

[1] हे देवदत्त इति केषुचित्पाठः।

इति पूरणादिभिर्निषेधान्न भवति । तत्र 'पूरण' इति पूरणार्थप्रत्ययान्ताः । गुण इति गुणद्वारेण गुणिनि वर्तितुं शक्ता गुणमात्रनिष्ठाः [1]शुक्लादयः ; ये तु गुणं स्वनिष्ठतयैवाभिदधति न ते रसादयः, यतस्तत्स्थैश्च गुणैष्षष्ठी समस्यत इति तैस्समास उक्तः । सुहितार्थास्तृप्त्यर्थाः । सदिति 'तौ सत्' इति सत्संज्ञौ शतृशानचौ । अव्यया उक्ताः । तव्यो न सानुबन्धकः, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति । समानाधिकरणमेकविभक्त्यन्तं विशेषणं विशेष्यं वा ॥

अथ शत्रन्तात् स्त्रीप्रत्यया इह प्रदर्श्यन्ते—'उगितश्च' यत्प्रातिपदिकमवयवद्वारेण साक्षाद्वा उगित् 'येनविधिस्तदन्तस्य' इति तदन्तात्, व्यपदेशिवद्भावेन केवलाच्च प्रातिपदिकात् स्त्रियां ङीप्स्यात् । ङकारः सामान्यग्रहणार्थः, पकारस्तदविघातार्थः । 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति परिभाषे प्रातिपदिकस्य रूपग्रहणप्रत्ययविधिविषये इति नेह स्तः । ङीबन्तस्य 'यूस्त्र्याख्यौ नदी' अन्यानपेक्षया स्त्रियां वृत्तमीदूदन्तं नदी, इति नदीत्वे 'शप्श्यनोर्नित्यम्' शप्श्यनोर्निमित्तत्वेन सम्बन्धिनश्शतुर्नित्यं नुम् शीनद्योः परयोः । नुम् मित्वादन्त्यादचः परः । इह नदीशब्दो नद्यवयवे वर्तते इति शतुर्नदीपरत्वम् । भवन्ती । अतिभवन्ती । ङ्यन्तत्वात्स्वादिषु सोर्हल्ङ्यादिलोपः । भवन्त्यौ । भवन्त्यः । अजादौ 'इको यणचि' इति संहितायां यण्भवति । 'प्रथमयोः पूर्वसवर्णः' इत्यकः प्रथमाद्वितीययोरजादौ विभक्तौ परतः पूर्वपरयोः पूर्वसवर्णदीर्घ एक इत्येतदत्र न भवति । 'दीर्घाज्जसि च' इति निषेधात् । चकारादिचीति गृह्यते ॥

---

[1] मु—गुणगुणिनिष्ठाः ।

हे भवन्ति—'अम्बार्थनद्योः ह्रस्वः । अम्बार्था मात्रर्थाः । 'एङ्ह्रस्वात्सम्बुद्धेः' इति सम्बुद्धेर्हलो लोपः । 'एकवचनं संबुद्धिः' । संबोधने प्रथमाया इति शेषः ॥

भवन्तीम्, भवन्तीः—अत्र 'अमि पूर्वः' पूर्वसवर्णदीर्घश्च यणं बाधेते । ङिद्वचनेषु 'आण्नद्याः' इति टित्त्वादादिराडागमः । 'आटश्च' इति यथायोगमैकार आकारश्च वृद्धिः—भवन्त्यै, भवन्त्याः । आमि 'ह्रस्वनद्यापो नुट्' इति नुट् । टित्त्वादादिः—भवन्तीनाम् । सप्तम्येकवचने 'ङेराम्नद्याम्नीभ्यः' इत्यामादेशे भवन्त्याम् । नीशब्देन तदन्तो ग्रामण्यादिरुच्यते ॥

भवन्तितरा, भवन्तीतरा । पूर्ववत्तरप् । अत्र 'घरूपक-ल्पप्चेलड्ब्रुवगोत्रमतहतेषु ङ्योनेकाचो ह्रस्वः' इति घादिषु परेषु ङ्यन्तस्यानेकाचो विधीयमानो नित्यो ह्रस्वः 'उगितश्च' इत्युगितः परस्या नद्या विधीयमानेन ह्रस्वविकल्पेन बाध्यते, अत्र 'घादयः प्रत्ययाः' चेलडादीनि प्रातिपदिकानि । अत्र हरदत्तः—चेलडादीनां वृत्तिविषये कुत्सनवचनत्वात् तैः 'कुत्सितानि कुत्सनैः' इति समासः इति । न्यासकारस्तु—चेलड्ब्रुवगोत्राणामेवं समासमुक्त्वा मतहताभ्यां तु 'विशेषणं विशेष्येण' इत्याह । एवं मतहतादिष्वप्युदाहर्तव्यम्[1] ॥

अथ नपुंसकप्रक्रिया । भवत् ब्राह्मणकुलं तिष्ठति पश्यति वा । 'स्वमोर्नपुंसकात्' इति लुक् भवन्ती कुले—'नपुंसकाच्च' इत्यौङः शीभावः । औङिति प्रथमाद्वितीययोर्द्विवचनस्य पूर्वाचार्याणां संज्ञा । शकारः 'आच्छीनद्योः' इति विशेषणार्थः । 'शप्श्यनोः' इति

---

[1] तमबादिष्वप्युदाहर्तव्यं इति मुद्रितकोशे एकस्मिन् लिखितकोशे च पाठः ।

नित्यं नुमागमः । भवन्ति कुलानि—'जश्शसोश्शिः' इति नपुंसकाङ्गात्परत्वे जश्शसोः शिरादेशः । शकारः शीति तत्रतत्रानुवादार्थः । 'शि सर्वनामस्थानम्' इति शेः सर्वनामस्थानत्वे 'नपुंसकस्य झलचः' झलन्तस्याजन्तस्य नपुंसकस्य सर्वनामस्थाने नुम् इति नुम् । भवता इत्यादि पुंलिङ्गवत् ॥

अथ शानच्—व्यतिभवमानः—'आने मुक्' इत्यदन्तस्याङ्गस्यानपरत्वेन मुक् कित्त्वादन्त्यः । व्यतिभवमानौ —'प्रथमयोः पूर्वसवर्णः' इति दीर्घस्य 'नादिचि' इति निषेधे 'वृद्धिरेचि' इति वृद्धिः । व्यतिभवमानान्—'तस्माच्छसो नः पुंसि' तस्मात्प्रथमयोः पूर्वसवर्णदीर्घात् परस्य शसवयवस्य सकारस्य न इति नकारादेशः । व्यतिभवमानेन—'टाङसिङसामिनात्स्याः' अदन्तादङ्गात्परेषां टादीनां यथासङ्ख्यमिनादय इति इनादेशो गुणः । व्यतिभवमानाभ्याम्—'सुपि च' इत्यदन्ताङ्गस्य यञादिसुप्परत्वाद्दीर्घः । व्यतिभवमानैः—'अतो भिस ऐस्' इत्यदन्ताङ्गात्परत्वेन भिस ऐसादेशः । व्यतिभवमानाय—'ङेर्यः' इत्यदन्तादङ्गात्परत्वेन ङेर्यादेशः । 'कष्टाय' इति निर्देशात् सन्निपातपरिभाषाया अनित्यत्वात् 'सुपि च' इति दीर्घः । व्यतिभवमानेभ्यः—अत्र झलादिबहुवचनसुप्परादन्ताङ्गत्वेन 'बहुवचने झल्येत्' इत्येत्त्वम्, 'सुपि च' इति दीर्घश्च प्राप्नोति । तत्र 'विप्रतिषेधे परं कार्यम्' द्वयोस्तुल्यबलविरोधे परस्य प्राप्यमाणत्वात् परमेत्वं प्रवर्तते । व्यतिभवमानात्, व्यतिभवमानस्य—'टाङसि' इत्यादिना ङसिङसोरात्स्यौ । व्यतिभवमानयोः—'ओसि च' इत्यदन्तस्याङ्गस्य औस्परत्वे नकारेऽयादेशः । व्यतिभवमानानाम्—'ह्रस्वनद्यापो नुट्' इति नुटि अजन्त-

स्याङ्गस्य नाम्परत्वेन 'नामि' इति दीर्घः । 'सुपि च' इत्येव वा । व्यतिभवमाने—'आद्गुणः'। व्यतिभवमानेषु—एत्वे षत्वम् ॥

व्यतिभवमानस्येदं व्यातिभवमानम्—अत्रासामानाधिकरण्ये शानच् , 'तस्येदम्' इत्यपि आदिवृद्धिः । 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति पदान्ताभ्यां यकारवकाराभ्यां परस्याचामादेरचो वृद्धिर्न भवति किं तु ताभ्यां पूर्वं यथासङ्ख्यमैजागमो भवति तद्धिते ञ्णिति णिति किति वा पर इत्येतस्य 'न कर्मव्यतीहारे' इति निषेधः ॥

अथ स्त्रियाम् व्यतिभवमाना—'अजाद्यतष्टाप्' अजादिगणपठितादकारान्ताच्च प्रातिपदिकात् स्त्रियां टाप् इति टाप् । पकारः सामान्यग्रहणार्थः । टकारस्तदविघातार्थः । अत्र शानचः स्थानिवद्भावेन टित्त्वात् 'टिड्ढाणञ् द्वयसज् दघ्नञ् मात्रच् तयप् ठक् ठञ् कञ् क्वरप् ख्युनाम्' इति यथाकथंचित् टितः प्रातिपदिकाड्ढाद्यन्ताच्च अनुपसर्जनात् स्त्रियां विधीयमानो ङीप् । ट एव इत् यस्य सः टित् इत्यवधारणस्याश्रयणात् लटश्च ह्यनुबन्धकत्वान्न भवति । सामग्री इत्यादौ टकोऽनेकानुबन्धकत्वेऽपि टित्त्वसामर्थ्यात् ङीप् । लटस्तु टित्त्वमेत्वाद्यर्थतया सावकाशम् । हल्ङ्यादिना सुलोपः ॥ व्यतिभवमाने—'औङ आपः' इत्यापः परत्वेनौङः शीभावे गुणः । ईकारप्रत्ययपरत्वेन यस्येति लोपो न भवति, 'औङः श्याम्परे प्रतिषेधः' इति निषेधात् ॥ व्यतिभवमानाः—सवर्णदीर्घः । हे व्यतिभवमाने—'संबुद्धौ च' इत्याप एत्वम् । व्यतिभवमानया—आङि चाप इत्येत्वे अयादेशः । आङिति तृतीयैकवचनस्य पूर्वा-

चार्यसंज्ञा । चकारात् 'ओसि च'॥ **व्यतिभवमानायै**—'याडापः' इत्यापः परस्य ङिद्वचनस्य याडागमष्टित्त्वादादिः । 'वृद्धिरेचि' इति वृद्धिः । **व्यतिभवमानायाः, व्यतिभवमानयोः**—'आङि चापः' इत्येत्वे अयादेशः । **व्यतिभवमानानाम्**—'ह्रस्वनद्यापो नुट्' इति नुट् । **व्यतिभवमानायाम्**—ङेरामादेशः । **व्यतिभवमानासु** ॥

अथ नपुंसके **व्यतिभवमानम्**—'अतोम्' इत्यम्भावः । **व्यति-भवमाने**—'नपुंसकाच्च' इति शीभावे पूर्ववदौङः श्यामिति यस्येति लोपनिवृत्तिः ॥ **व्यतिभवमानानि**—'जश्शसोश्शिः'। 'नपुंसकस्य झलचः' इति नुम् । 'सर्वनामस्थाने चासम्बुद्धौ' इति नान्तस्याङ्गस्यो-पधाया दीर्घः ॥ **हे व्यतिभवमान**—'अतोम्' इत्यम्भावे अमि पूर्वत्वे च 'एङ्ह्रस्वात्' इति संबुद्धिर्हलो मकारस्य लोपः । तृतीयादि पुंलिङ्गवत् ॥

'लृटः सद्वा' इति लृटोपि शतृशानचोर्विधानात् **भविष्यन्** इत्यादि लङ्वत् सर्वमुदाहार्यम् ॥

तत्र स्त्रियां नपुंसकद्विवचने च 'आच्छीनद्योर्नुम्' इति नुम्विकल्पो विशेषः । अत्रानुवृत्तं शतृग्रहणं स्वावयवे वर्तते । तेनावर्णान्ता-दङ्गात्परो यः शत्रवयवः तदन्तस्याङ्गस्य शीनद्योः परयोर्वा नुमिति सूत्रार्थः । अथवा अवर्णान्तादङ्गात् शीनद्योः परयोः शत्रन्तस्य वा नुमिति । तत्र 'येन नाव्यवधानं' इति तकारेण व्यवधानमाश्रयिष्यते, अवर्णान्ताङ्गात्परो यश्शता तदन्तस्याङ्गस्येति सूत्रार्थो नोक्तः । अङ्गान्तस्य शत्रवयवस्य चान्तरङ्गत्वान्नुमः पूर्वमेकादेशे व्यपवर्गाभावादवर्णान्ताङ्गात्परस्य शतुरसम्भवात् । न चान्तादिवद्भावः, 'उभयत आश्रयणे नान्तादिवत्'

इति निषेधात् । भूतपूर्वगत्याश्रयणे तु लुग्विकरणादौ 'अदती जुह्वती'[1] इत्यादावपि प्रसङ्गात् ।।

व्यतिभविष्यमाणः— इत्यादौ 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वम् । अडादिभिर्व्यवायेऽपि रषाभ्यां परस्य समानपदस्थस्य नो ण इति सूत्रार्थः । भविष्यन् इत्यत्र तु 'पदान्तस्य' इति निषेधात् न भवति ।।

अथ सनन्ताः प्रदर्श्यन्ते—'धातोः कर्मणस्समानकर्तृकादिच्छायां वा' यो धातुरिषेः कर्म समानकर्तृकश्च र्थद्वारेण तस्मादिच्छायां वा सन् स्यात् । नकारो निर्देशाद्यर्थः । 'सनि ग्रहगुहोश्च' ग्रहिगुहिभ्यामुगन्तादेकाचश्च परस्य सनो नेट् इतीण्निषेधः । 'इको झल्' इति इगन्ताद्धातोः परस्य झलादेः सनः कित्त्वान्न गुणः । 'सन्यङोः' एतदन्तस्य प्रथमैकाचो द्वे भवतो अजादेस्तु द्वितीयस्य इति द्वित्वे अभ्यासकार्यम् । 'सनाद्यन्ता धातवः' इति सनादिणिङ्पर्यन्तप्रत्ययान्तानां धातुत्वात्पूर्ववल्लडादिषु तिबादयः । बुभूषति इत्यादि ।।

लिटि तु—'कास्प्रत्ययादाममन्त्रे लिटि' कासेः प्रत्ययान्ताच्च धातोर्लिटि पर आमप्रत्ययः इत्यामः । अकारो मकारपरित्राणार्थः । सूत्रे स्वत एव निर्देशात्पररूपम् । आमस्यार्धधातुकत्वात् 'अतो लोप आर्धधातुके' इति सनोऽकारस्य लोपः । 'आमः' इत्यामः परस्य लेर्लुक् । प्रत्ययलक्षणेन कृदन्तत्वादुत्पन्नस्य सुपः स्वरादिषु 'आम्' इति पाठादव्ययत्वाल्लुक् । तत्र यद्यमा साहचर्यात् आमपि

[1] मु–घ्नती ।

तक्ति एवेत्युच्यते तर्ह्याम इत्येव लुग्भविष्यति । लिग्रहणं तु तत्र निवर्तिष्यते । अत्रामन्तस्याव्यक्तपदार्थत्वात्पदत्वाय प्रथमातिक्रमे कारणाभावात् सुरेवोत्पत्स्यते । तस्य च हल्ङ्यादिलोपस्सिद्ध इति किं लुको विधानेनेति चेत् यदा तु प्रयोगवशात् द्वित्वाद्यभिव्यक्तौ द्विवचनाद्युत्पद्यते तदर्थं लुगेषितव्यः । 'कृञ्चानुप्रयुज्यते लिटि' इत्यामन्तस्य पश्चादेवाव्यवहिता एव कृभ्वस्तय एव लिट्पराः प्रयोक्तव्याः । अत्र 'अभूततद्भावे कृभ्वस्तियोगे' इति कृशब्दस्य 'कृञो द्वितीय' इति ञकारेण प्रत्याहारनिर्देशात् कृञिति कृभ्वस्तय उच्यन्ते । बुभूषाञ्चकार । बुभूषाम्बभूव । अत्र 'मोनुस्वारः' पदान्तस्य मोनुस्वारो हलीत्यनुस्वारे तस्य 'वा पदान्तस्य' इति यजि परे विधीयमानः परसवर्णविकल्पो भवति । अनुस्वारपक्षोप्युदाहार्यः । 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इत्यत्र पूर्ववदित्यनुवृत्त्या 'पूर्ववत्कृञोनुप्रयोगस्य' इति द्वितीयोपि योगस्संपद्यते । तत्राद्यः आम्प्रत्ययप्रकृतेरिव अकर्त्रभिप्रायेऽप्यनुप्रयुज्यमानस्य कृञ आत्मनेपदं प्राकरणिकं विधत्ते । द्वितीयस्त्वर्थात् पूर्वस्येव कर्त्रभिप्राये परस्मैपदमित्यत्र आम्प्रकृतेः शेषत्वेन नित्यपरस्मैपदित्वात् कृञोऽपि परस्मैपदमेव । इदमेव कृञ्ग्रहणमनुप्रयोगे कृञिति प्रत्याहारग्रहणे लिङ्गं, अन्यथाऽनुप्रयोगस्येत्येव ब्रूयात् ॥

**बुभूषामास**—अत्र 'अस्तेर्भूः' इत्यार्धधातुके विषये विधीयमानो भूभावोऽनुप्रयोगे प्रत्याहारग्रहणसामर्थ्यात् न भवति । अन्यथा प्रतिपत्तिलाघवाय कृभ्वित्येव ब्रूयात् ।

**बुभूषिता**—इट्यतो लोपो गुणं परत्वात् 'वार्णादाङ्गम्' इति वा बाधते ।

बुभूषिष्यति । बुभूषतु । अबुभूषत् । बुभूषेत् ।

आशिषि बुभूष्यात्—अतो येयो न भवति आर्धधातुकत्वात् । अत्र 'अकृत्सार्वधातुकयोर्दीर्घः' इति अकृद्यकारे असार्वधातुके यकारे च परे अजन्तस्याङ्गस्य विधीयमानो दीर्घः 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इत्यतो लोपस्य बलीयस्त्वात्तेन बाध्यते ॥

अबुभूषीत्—'अस्ति सिचोऽपृक्ते' इति इडागमे 'इट ईटि' इति सिचो लोपः । 'सिज्लोप एकादेशे सिद्धो वक्तव्यः' इति सिच्लोपस्य पूर्वत्रासिद्धत्वाभावात् सवर्णदीर्घः ।

अबुभूषिषुः—'सिजभ्यस्त' इति जुस् । अबुभूषिष्यन् ।

अथात्मनेपदम्—व्यतिबुभूषते, व्यतिबुभूषांचक्रे । 'आम्प्रत्ययवत्' इति नित्यस्तङ् कृञः । व्यतिबुभूषांबभूव, आस इति वा । व्यतिबुभूषिता । व्यतिबुभूषितासे । व्यतिबुभूषिता । व्यतिबुभूषिष्यते । व्यतिबुभूषताम् । व्यत्यबुभूषत व्यतिबुभूषते । आशिषि—व्यतिबुभूषिषीष्ट । व्यत्यबुभूषिष्यत सर्वत्र 'पूर्ववत्सनः' इति तङ् । सनः पूर्वो यो धातुः येन निमित्तेनात्मनेपदी सनन्तमपि तेनैव तथेत्यर्थः ॥

अथ भावकर्मणोः बुभूष्यते त्वया । अनुबुभूष्यते सुखम् । यकि 'अकृत्सार्वधातुकयोः दीर्घः' इति दीर्घं बाधित्वा अतो लोपः पूर्वविप्रतिषेधेन भवति ॥

बुभूषांचक्रे भवता, अनुबुभूषांचक्रे सुखम् . बभूवे आसे इति वा । इहानुप्रयुज्यमानानामामन्तार्थाभिव्यक्तिमात्रपरत्वात् करोतेर्भावे, इतराभ्यां कर्मणि लिडुपपद्यते । प्रयुज्यते चैवम्—

रोमन्थमन्थरचलद्गुरुसास्नमासां—
चक्रे निमीलदलसेक्षणमौक्षकेण ।*
प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्भिस्मिताक्षैः
नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे ।।*

इति । 'ह एति' इत्यस्तेर्हत्वं तासि साहचर्यात् सार्वधातुकोत्तमैकवचने एवेतीह 'लिटस्तझयोः' इति तशब्दस्यैशीटश्चौत्वे न भवति । केचित्तु—तासेरुत्तमैकवचनमेवैकारस्सम्भवतीत्येतावन्मात्रसाहचर्याश्रयेण लिङुत्तमैकवचनेऽपि हत्वमिच्छन्ति । तत्र साहचर्यसंकोचे कारणं न विद्मः । लङ्लटोराशीर्लिङि लुङि च कर्तृवदेव रूपम् । न च चिण्वदिटि वृद्धौ 'आतो युक्चिण्कृतोः' इत्याकारान्तस्य चिणि ञ्णिति कृति च परे युको विधानाद्रूपभेदप्रसङ्गः, 'ण्यल्लोपौ' इत्यादिना वृद्धेरतो लोपेन बाधस्योक्तत्वात् । लुङेकवचने तु चिणो विधानात् तत्र अबुभूषि इति विशेषः । तथा लोटि लङि विध्यादिलिङि च कर्तृवत्प्रक्रिया । यक्तु विशेषः ।।

कर्मकर्तरि 'भूषाकर्मकिरादि[1]सनां चोपसङ्ख्यानमन्यत्र त्मनेपदात्' इति यक्चिणोर्निषेधात्सर्वत्र कर्तृवद्रूपम् । वत्करणास्स्वाश्रये भावे लकारे यक्चिणोर्विषये कर्मवद्रूपम् । कर्तरि तृतीया विशेषः । अभिबुभूष्यते शत्रुणा स्वयमेव इत्यादि । इच्छायाः कतृस्थत्वेन कर्मस्थत्वाभावेऽपीष्यमाणस्य प्राधान्याच्चस्य च कर्मस्थत्वादस्ति कर्मवद्भावः । अत एव 'भूषाकर्म' इति यक्चिणौ निषिध्येते ।

---

* शिशुपालवधे-५-६२,२०-७९ । [1] किरति ।

अथ यङ्—'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' पौनः-पुन्यं भृशार्थो वा क्रियाणां समभिहारः। तत्र द्योत्ये एवंविधाद्धातोः यङ् स्यात्। द्विर्वचनादि पूर्ववत्। 'गुणो यङ्लुकोः' यङि यङ्लुकि चाभ्या-सस्येको गुण इति गुणः। **बोभूयते**। 'अनुदात्तङित आत्मनेपदम्'। यङो ङकारस्य गुणप्रतिषेधार्थत्वेनावयवे चरितार्थत्वान्न समुदायार्थत्वमिति यङन्तस्य धातोरङित्त्वात्कथमात्मनेपदमिति नाशङ्कनीयम्। तत्र धातु-ग्रहणाभावात् ङिन्मात्रात्परस्य लस्य तद्विधेः। 'अनुदात्तेतो ये धातवो ङितश्च' इति प्रायिकाभिप्रायं वृत्तिकारवचनम्। अथवा—ङितश्चेत्यत्र शब्दा इत्यध्याहार्यम्। अत एव अनुदात्तेतो ङितश्च ये धातव इति नोक्तम्। चङादावतिप्रसङ्गपरिहारः तत्र तत्र वक्ष्यते। **बोभूयते त्वया**। **अनुबोभूयते सुखम्** इत्यादि सनन्तवत्प्रक्रिया। कर्मवत्कर्मकर्ता।

लुङि तशब्दे 'अचः कर्मकर्तरि' इति चिणो विकल्पनात् पक्षे सिजपि भवति। तेन **अभ्यबोभूयि शत्रुः स्वयमेव**, **अभ्यबोभूयिष्ट** इति च भवतः। तत्करणाद्भावे तु लकारे नित्यं चिणेव **अभ्यबोभूयि शत्रुणा स्वयमेव** इति॥

अथ यङ्लुक्। 'यङोऽचि च' यङोऽचि प्रत्यये नित्यं लुक्। चकारेण बहुलग्रहणानुकर्षणादयं विकल्पेनानैमित्तिकोऽपि। प्रत्ययलक्षणेन यङन्तत्वाद्धातुत्वे लडादि द्विर्वचनं च। आत्मनेपदं तु ङिन्मात्रात्तद्विधेरप्रत्ययलक्षणत्वान्न भवति। 'चर्करीतं पर-स्मैपदमदादिवच्च' इति वचनात् 'अदिप्रभृतिभ्यश्शपः' इत्यदा-दिभ्य उक्तस्य शपो विधीयमानो लुक् यङ्लुगन्तेऽपि भवति।

---

[1] मु—स्परस्मैपद्यदादि।

चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्यव्यपदेशः। अत्र परस्मैपदमित्यनुवादो न विधिरित्याहुः। 'यङो वा' इति यङ्लुगन्तात्परस्य हलादेः पितस्सार्वधातुकस्य वा ईडागमः— बोभवीति बोभोति। 'भूसुवोस्तिङि' इति गुणनिषेधोऽत्र न भवति दाधर्तिसूत्रे बोभूत्विति छन्दसि गुणाभावार्थान्निपातनाज्ज्ञापकात्। इदमेव 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इत्यत्र ज्ञापकम्॥

बोभूतः। बोभुवति—'अदभ्यस्तात्' अभ्यस्तादङ्गात्परस्य प्रत्ययादेर्झकारस्य अत् इत्यदादेशे उवङादेशः। 'उभे अभ्यस्तम्' अस्मिन्प्रकरणे ये द्वे विहिते ते उभे अभिसमुदिते[1] अभ्यस्तम्। तथा 'जक्षित्यादयष्षट्' इति जक्षिति. इतरे तदादयो जागृ दरिद्रा शास्दीधीङ्वेवीङ्च चकासश्च॥

बोभवांचकार— 'पूर्ववत्कृञोनुप्रयोगस्य' इति कृञो नित्यं परस्मैपदम्।

बोभविता। बोभविष्यति।

बोभवीतु, बोभोतु बोभूतात्—इत्यत्र तातङो ङित्त्वान्न गुणः। 'सार्वधातुकमपित्' इत्यस्य प्रसज्य प्रतिषेधत्वात्तत्र च ङिदित्यनुवृत्तेः तस्य च श्रूयमाणस्य पितश्चोद्देश्योपादेयत्वव्यत्ययेन पिन्न ङित् ङिन्न पित् इत्यर्थद्वयस्य भाष्ये समाश्रयणात् तातङः स्थानिवत्त्वप्राप्तं पित्त्वं ङित्त्वेनानवकाशेन निवार्यत इति ईडभावः॥

बोभूहि—'सेर्ह्यपिच्च' इति पित्त्वनिषेधादीड्गुणौ न भवतः॥

---

[1] मु–अपि समुदिते।

**बोभवानि । भोभवाव बोभवाम**—लोट्युत्तमस्य[1] पित्त्वात् उवङं बाधित्वा परत्वाद्गुणो भवति । अहलादित्वादीडभावः ॥

**अबोभवीत् । अबोभोत् । अबोभूताम् । अबोभवुः**—'सिजभ्यस्त' इति जुसि 'जुसि च' इतीगन्तस्याङ्गस्य गुणः ॥

**बोभूयात्**—यासुटो ङित्त्वेन पित्त्वस्य निवर्तनार्दंटोऽभावः । आशिषि तु असार्वधातुकत्वेन लिङस्सलोपाभावो विशेषः ॥

**बोभूयुः** इत्यत्र जुस्भावे 'उस्यपदान्तात्' इति पररूपम् । यासुटो जुस्भक्तत्वेन 'जुसि' इति गुणोत्र न भवति, येन नाप्राप्तिन्यायेन 'सार्वधातुकमपित्' इत्यतिदिष्टङित्त्वाश्रयस्य निषेधस्यैव तेन बाधात्; तत्र 'क्सस्याचि' इत्यतोऽचीत्यधिकारादजादौ जुसि तद्विधानाद्वा ॥

**अबोभोत् । अबोभूवीत् ।** 'गातिस्था' इति सिचो लुक् । 'यङो वा' इतीटो विकल्पः सिचः प्रत्ययलक्षणेन 'अस्ति सिचोऽपृक्ते' इति नित्यस्तु न भवति, श्रूयमाणे सिचि तस्योक्तत्वात् । ईट्पक्षे 'भुवो वुक्' इत्यजादिलक्षणो वुङ्नित्यत्वाद्गुणं बाधते । **अबोभूवन्** इत्यत्र सिचः प्रत्ययलक्षणेन 'सिजभ्यस्त' इति जुस्भावः 'आत एव' इति नियमान्न भवति । अभ्यस्ताश्रयस्तु विधिसाहचर्याल्लङ्विषय इति नेह प्रसज्यते । विदेर्ह्यव्यवहितो झिर्लङ्येव सम्भवति । न च सिचा साहचर्यात् लुङ्विषयोपि स्यादिति वाच्यम्, 'विप्रतिषेधे परम्' इति परसाहचर्यस्य बलीयस्त्वात् ॥

**अबोभविष्यत्** इत्यादि ॥

---

1 'आड्उत्तमस्य आट्युत्तमस्य' इत्यपि पाठः ।

अथात्मनेपदम् । व्यतिबोभूते । व्यतिबोभुवाते । अजादावुवङ् ।

व्यतिबोभवांचक्रे । व्यतिबोभवांबभूव । 'आम्प्रत्ययवत्' इति कृञो नित्यं तङ् ।

व्यतिबोभविता । व्यतिबोभविष्यते । व्यतिबोभूताम् । व्यतिबोभुवाताम् । अजादावुवङ् । उत्तमे त्वाटि गुणः[1] । व्यतिबोभवै ॥

व्यत्यबोभूत । व्यत्यबोभुवाताम् । व्यत्यबोभुवि । पूर्ववदुवङजादौ ॥

व्यतिबोभुवीत । व्यतिबोभुवीयाताम् । व्यतिबोभुवीय । पूर्ववदजादावुवङ् ॥

आशिषि व्यतिबोभविषीष्ट—आर्धधातुकत्वादिड्गुणौ । ध्वमि 'विभाषेटः' इति मूर्धन्यविकल्पो द्रष्टव्यः ॥

व्यत्यबोभविष्ट ध्वमि पूर्ववन्मूर्धन्यविकल्पः ॥

व्यत्यबोभविष्यत ॥

भावकर्मणोः कर्मकर्तरि च बोभूयते त्वया इत्यादि सर्वं प्रकृतिवन्नेयम् । अभ्यास एको विशेषः ॥

अथ सत् । बोभुवत् ब्राह्मणः । उगिल्लक्षणो नुम् 'नाभ्यस्तात्' इति निषिध्यते । बोभुवती स्त्री । बोभुवती ब्राह्मणकुले—स्त्रियां नपुंसकद्विवचनयोश्च नित्यत्वादन्तरङ्गत्वाच्च नुमः पूर्वं शपो लुक्यङ्गस्यानवर्णान्तत्वात् 'आच्छीनद्योः' इति विकल्पितो नुम्न भवति ।

---

[1] भु उत्तमे पित्त्वाद्गुणः ।

नापि 'श्यप्श्यनो' इति नित्यः, तस्यावर्णपरशतृविषयत्वात् । न च प्रत्ययलक्षणेनात्परत्वं, तस्यातल्लक्षणत्वात् ॥

वेऽसुवति कुलानि, वेऽसुवन्ति कुलानि—इत्यत्र तु शौ 'नाभ्यस्तात्' इति निषेधस्य 'वा नपुंसकस्य' इति विकल्पनात् पक्षे नुम्भवति ॥

व्यतिवेऽसुवानः—लडादेशस्य तु शतुः स्येन व्यवधानात् अभ्यस्तात्परत्वाभावात् 'नाभ्यस्तात्' इति निषेधो न भवति । नापि 'वा नपुंसकस्य' इति विकल्प इति सर्वं प्रकृतिवत् ॥

अथ णिच् । 'हेतुमति च' स्वतन्त्रस्य कर्तुः प्रयोजको हेतुः । तद्व्यापारः प्रेषणादिः हेतुमान् । स च कर्ता माविरंसीत् इति । तत्र धातोर्णिच स्यात् । णकारो वृद्ध्यर्थः । चकारो णिङ्णिचोस्सामान्यग्रहणविघातार्थः । सनाद्यन्तत्वाद्धातुत्वे लडादयः । तेषां 'णिचश्च' इति क्रियाफलस्य कर्तृगामित्वे तङ्, अन्यथा तु परस्मैपदम् । भावयते सस्यम् । भावयति सस्यम् । यदा तु फलस्य कर्तृगामित्वमुपपदेन प्रतीयते तदा 'विभाषोपपदेन प्रतीयमाने' इति परस्मैपदमपि भवति स्वं[1] सस्यं भावयति इति । यदा चित्तवत्कर्तृकादकर्मकादस्माण्णिच् तदा क्रियाफलस्य कर्तृगामित्वेऽपि 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदम् । पुत्रं भावयति इति विभाषोपपदादप्ययमेव विप्रतिषेधेन—स्वं पुत्रं भावयति इति । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इत्यणौ कर्ता णौ कर्म ॥

---

[1] सु–स्वस्य ।

भावयांचक्रे चकार. बभूव आस । ' अयामन्ताल्वाय्येत्न्विष्णुषु ' इत्यामादिषु विधीयमानो णेरयादेशो 'णेरनिटि' इत्यनिडादावार्धधातुके विधीयमानं णिलोपमपवादत्वाद्बाधते । यदाऽयं ण्यन्तः चित्तवत्कर्तृक-प्रकृतित्वेन नित्यपरस्मैपदी तदा अनुप्रयुक्तः करोतिरपि 'पूर्ववत्कृञोनु-प्रयोगस्य' इति कल्पितेन[1] योगेन परस्मैपद्येव ॥

भावयिता इत्यादि प्रकृतिवत् । आशीर्लिङि 'णेरनिटि' इति णिलोपः ' । स च ' अकृत्सार्वधातुकयोः ' इति दीर्घं ' ण्यल्लोपौ ' इत्यादिना बाधत इति भाव्यात् इत्यादि भवति ॥ आत्मनेपदे तु इडादित्वाण्णिलोपो नेति गुणायादेशयोः भावयिषीष्ट इत्यादि । ध्वमि ' विभाषेटः ' इति मूर्धन्यविकल्पः ॥

लुङि णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ' इति सिजपवादश्चङ । चकारङकारौ विशेषणार्थौ । णिलोपः । ' णौ चङ्युपधाया ह्रस्वः ' इति चङ्परे णावङ्गस्योपधाया ह्रस्वः । ' चङि ' इत्यनभ्यासस्य चङ्परस्य धातोः प्रथमस्यैकाचोऽजादेस्तु द्वितीयस्य इति द्विर्वचने कर्तव्ये ' णौ कृतं[2] स्थानिवत् ' इति रूपस्थानिवत्त्वे भूशब्दो भौशब्दो वा द्विरुच्यते । तत्र भौशब्दस्य द्विर्वचनपक्षेऽपि ' ह्रस्वः ' इत्यभ्यासस्य ह्रस्वो भवन् ' एच इग्घ्रस्वादेशे ' इति नियमादिग्भवन्नान्तरतम्यादुकारः । तस्य च ' ओः पुयण्ज्यपरे ' इतीकारः । उवर्णान्तस्याभ्यासस्यावर्णपरे पवर्गे यणि जकारे च परत इकार इति सूत्रार्थः । तस्य ' दीर्घो लघोः ' इति दीर्घः । चङ्परे णौ यदङ्गं तदभ्यासस्य लघोर्लघुनि धात्वक्षरे परे दीर्घो भवति अनग्लोप इति सूत्रार्थः । इदमेवेत्ववचनं ज्ञापकं

---

[1] सु—इति भिन्नेन कल्पितेन । [2] कृतमभ्यासस्य ।

णौ कृतस्य स्थानिवत्त्वे; अन्यथा उवर्णान्ताभ्यासो न क्वचिदपि स्यात् ॥

नन्वत्र 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति चङ्परे णौ यदङ्गं तदभ्यासस्य लघुनि परेऽनग्लोपे सन्वत्कार्यातिदेशादित्वं सिद्धम्। सन्वत्कार्यं चेत्वमेव, 'सन्यतः' इति सनि परे अभ्यासाकारस्येत्वविधानात्; किं णौ कृतस्य स्थानिवत्त्वेन येन 'ओःपुयण्ज्य' इति वक्तव्यं स्यात्—सत्यमत्र सन्वद्भावेनापि सिध्यति; जुहावयिषतीत्यादावप्येवं स्यात्। अबीभवत्। अबीभवत।

नन्वत्र यङ इव चङोऽपि ङित्त्वेन तङ् स्यात् इति चेत्—न विकरणात्पूर्वं नियमप्रवृत्तेः। अत्र च ज्ञापकं 'वृद्भ्यः स्यसनोः' इति स्यसनोस्तङो विकल्पनम्। पूर्वं तु विकरणे तेन व्यवधानान्नानुद्वात्तेतोऽनन्तरस्तङस्ति। नापि शेषादिति, आत्मनेपदपरस्मैपदनियमयोरत्राप्रसङ्गादेव। आत्मनेपदपरस्मैपदयोर्लस्य तिबादय इति सामान्येन सिद्धेः किमनेन विकल्पवचनेन ॥

अथ कर्मणि—ण्यन्तस्य सकर्मकत्वाद्भावासम्भवः। तत्र लट्लोट्लङ्विध्यादिलिङ्क्षु यकि विकरणे णिलोपे—भाव्यते। भाव्यताम्। अभाव्यत। भाव्येत इत्यादि। अतोऽन्येषु लुङ्व्यतिरिक्तेषु कर्तृवद्रूपम्। लुङि तु कर्तरि चङो विधानात्सिजेव। तशब्दे तु चिणिति—अभावि। अभावयिषाताम् इत्यादि। तत्र चिणि णिलोपः। अन्यत्र तु गुणायादेशौ। ध्वमि 'विभाषेटः' इति मूर्धन्यविकल्पः। स्यादिषु चिण्वदिट्पक्षे 'असिद्धवदत्राभात्' इति चिण्वदिटोः सिद्धत्वाण्णिलोपे—भाविष्यते। अभाविष्यत। अभाविषाताम्। भाविषीष्ट। भाविता इत्यादि द्रष्टव्यम्। अत्रापि

षीध्वंलुङ्लिटां धोऽङ्गादिति ढत्वम्, इण्णन्तादुत्तरस्य षीध्वंलुङोर्धकारस्य पूर्ववद्वा मूर्धन्यः । कर्मकर्तरि तु ; यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसङ्ख्यानम्' इति यक्चिणोर्निषेधाद्यथायोगं शप्चङोस्सर्वत्र कर्तृवद्रूपं, स्यादिषु तु कर्मवत् । वत्करणाद्भावे तु लकारे कर्मवदुदाहार्यम् । कर्तरि तृतीया विशेषः । 'णिश्रन्थि' इति यक्चिणोर्निषेधः कर्मकर्तरीतीह तौ स्त एव ॥

अथ कृतः प्रदर्श्यन्ते—भव्यं भवता । अनुभव्यो घटः । 'अचो यत्' इति यत् । अयं 'कर्तरि कृत्' इति कर्तरि प्राप्तोऽपि 'कृत्याः प्राङ्ण्वुलः' इति तव्यादीनां ण्वुलः प्राचः कृत्यसंज्ञाविधानात् 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोर्नियम्यते । 'भव्यगेय-प्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' इति निपातनात् कर्तर्यपि भवति । अत्र वाग्रहणं तयोरेवेति सामान्यस्य बाधा मा विज्ञायीति । उदाहरणेषु गुणे 'वान्तो यि प्रत्यये' इत्यावादेशः । अत्र वान्त इति पूर्वसूत्र-निर्दिष्टाववावावुच्येते । तौ च तत्र यथासङ्ख्यादोदौतोरितीहापि तथैव । अनेन च विशेषविहितेन यता सामान्यविहितानां तव्यत्तव्यानीयरां न बाधः । 'वाऽसरूपोऽस्त्रियाम्' इत्यस्याधिकारविहितस्यासरूपप्रत्ययस्य पक्षे बाधकत्ववचनात् । तव्यत्तव्ययोः स्वरे षष्ठीसमासनिषेधे च विशेषः । भवितव्यम् भवनीयम्,—अनीयरो रेफः 'उपोत्तमं रिति' इत्युपोत्त-मस्योदात्तार्थः ॥

अवश्यभाव्यम्—'ओरावश्यके' इत्यवश्यम्भावे द्योत्ये उवर्णान्त-लक्षणो ण्यत् । वृद्धौ 'वान्तो यि' इत्यावादेशः । पूर्ववदनेनापि तव्या-दीनां न बाधः । यत्तु सरूपत्वाद्बाध्यते । 'नानुबन्धकृतमसारूप्यम्'

इत्युक्तम् । अवश्यमो मकारस्य लुम्पेदवश्यमः कृत्ये तु काममनसोरपि इति समासे लोपः । समासश्च 'मयूरव्यंसकादयश्च' इति तत्पुरुषः । मयूरव्यंसकादिश्चाकृतिगणः ॥

देवभूयं गतः, देवत्वं गत इत्यर्थः । 'भुवो भावे' इत्यनुपसर्गे सुबन्ते उपपदे भुवः क्यप् । कित्त्वान्न गुणः । अनुपपदादुपसृष्टाच्चाचो यदेव । 'उपपदमतिङ्' इति तत्पुरुषो नित्यसमासः । उपपदं सुबन्त समर्थेन नित्यं समस्यते समासोऽतिङन्तश्चेति सूत्रार्थः । इदमेवातिङ्ग्रहण-मत्र 'सुपा' इत्यस्यासंबन्धे ज्ञापकम् । तथा योगविभागेन 'कुगतिप्रादयः' इत्यत्रापि सम्बध्यत इति तत्रापि सुपेत्यस्यासम्बन्धं ज्ञापयति । तेन 'गति-कारकोपपदानां कृद्भिस्सह समासवचनं प्राक्सुबुत्पत्तेः' इति पूर्वाचार्यपरि-भाषार्थस्संगृहीतो भवति । अस्य प्रयोजनमुत्तरत्र दर्शयिष्यते । 'तत्रोप-पदं सप्तमीस्थम्' इति तृतीये धात्वधिकारे सप्तम्या निर्दिष्टस्योपपदसंज्ञा । धात्वधिकारादेव तृतीये धात्वधिकारे इति सिद्धे तत्रग्रहणं योगविभागेनाधि-कृतेन प्रत्ययपदेन सम्बध्यते । तेनायमर्थः– तत्रोपपदे सत्येव प्रत्यय इति । **अभिभावी** । अभिभूतवान् इत्यर्थः । **आभिभवीभूत** इति— ग्रहादौ णिन्यन्तो निपातितः । **परिभवी** । **परिभावी**—अत्रैव निपात-नाण्णिनौ पक्षे वृद्ध्यभावः । **अभावी** –'अचामचित्तकर्तृकाणां' इति ग्रहादिपाठाण्णिनिः । अत्र प्रतिषिद्धानामित्यनुवृत्तेरयं प्रत्ययो नञ्पूर्वादेव । 'नञ्' नञ् समर्थेन सुबन्तेन समस्यत इति तत्पुरुषसमासः । 'नलोपो नञः' इति उत्तरपदे नलोपः । 'सर्वनामस्थाने चासम्बुद्धौ' इति नान्ताङ्ग-स्वादुपधादीर्घस्सर्वत्र । 'इन्हन्पूषार्यम्णां शौ' 'सौ च' इति उपधालक्षण-

दीर्घमात्रस्य शौ सावेव इति नियमात् अभिभाविनौ इत्यादौ न भवति। पदान्ते 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः। संबुद्धौ तु 'न ङिसंबुद्ध्योः' इति निषेधान्न भवति। परिपूर्वत्वे 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति समासप्रातिपदिकान्तस्य नकारस्य नुम्विभक्तिस्थस्य च पूर्वपदस्थान्निमित्तादुत्तरस्य वा णत्वविधानात् पक्षे परिभाविणौ इति णकार उदाहार्यः। संबुद्धौ तु 'पदान्तस्य' इति निषेधः। ननु चामुं विकल्पमपवादत्वाद्बाधित्वा 'कृत्यचः' इति उपसर्गस्थान्निमित्तात्परस्य कृत्स्थस्याचः परस्य नकारस्य नित्यं विधीयमानं णत्वं स्यात्। तत्र हि 'अनमान अनीय अनि इनि निष्ठादेशाः प्रयोजन' इति इनिरपि प्रतिपदं परिगण्यते। न चापवादेषु पूर्वत्रासिद्धत्वप्रसङ्गः। नैष दोषः, 'कृत्यचः' इत्यस्य 'नभाभूपूकमिगमिप्यायीवेपाम्' इति निषेधात्। स्त्रियां 'ऋन्नेभ्यो ङीप्' इति ङीपि अभिभाविनी इत्यादि॥

नपुंसके स्वमोर्लुकि न लोपः। संबुद्धौ तु 'वा नपुंसकानाम्' इति वा न लोपः। अभिभाविन् इत्यादि। शौ तु 'इन्हन्पूषार्यम्णां शौ' इति दीर्घे अभिभावीनि इति॥

वासरूपविधिना सर्वत्रात्र ण्वुल्तृचावपि भवतः—अभिभावकः, अभिभविता इत्यादि। तत्र ण्वुलो 'युवोरनाकौ' इत्यकादेशः। युवु इत्येतयोरुत्सृष्टानुबन्धयोः प्रतिज्ञातानुनासिकयणोः प्रत्यययोर्ग्रहणम्॥

तृचि तु 'ऋदुशनस्पुरुदंसोनेहसां च' इति असंबुद्धौ सावृकारान्तानामुशनसादीनां चाङ्गानां विधीयमाने अनङि ङित्त्वादन्त्यादेशे

'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्' इत्यबादीनामङ्गानामुपधायाः संबुद्धिवर्जिते सर्वनामस्थाने दीर्घवचनाद्दीर्घे नलोपः। अत्र सावसंबुद्धौ 'नोपधायाः' इति नान्तलक्षणो वा दीर्घः। संबुद्धौ द्विवचनादौ सर्वनामस्थाने सप्तम्येकवचने च 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः। स च 'उरण्परः' ऋवर्णस्य स्थानेऽण् प्रसज्यमान एव रपर इति रपरः। तत्र संबुद्धौ 'रात्सस्य' इति हल्ङ्यादिना वा सुलोपे हे **अभिभवितः**। अन्यत्र सर्वनामस्थाने 'अप्तृन्' इति दीर्घे **अभिभवितारौ** इत्यादि। **अभिभवितॄन्**—इत्यत्र पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वे 'पदान्तस्य' इति णत्वनिषेधः। **अभिभवित्रा, अभिभवितृभ्यां** इत्यादि। अजादौ यण्। ङसिङसोस्तु तयोरकारस्य ऋकारस्य च 'ऋत उत्' इत्येक उकार उभयोः स्थाने भवन्नप्यसावृकारस्थानिकोपीति पूर्ववद्रपरत्वे सलोपः॥ **अभिभवितॄणाम्**—'क्षुभ्नादिषु च' इति णत्वनिषेधे नृनमनतृप्नोतिग्रहणात् ऋवर्णगतोपि रेफो णत्वनिमित्तमिति 'रषाभ्याम्' इति णत्वं, 'नामि' इति दीर्घः। **अभिभवितरि**—'ऋतोङि' इति गुणः॥

स्त्रियां 'ऋन्नेभ्यो ङीप्' इति ङीप्—**अभिभवित्री** इत्यादि॥

नपुंसके पूर्ववत्स्वमोर्लुक्। **अभिभवितृ**। औङः शीभावे 'इकोचि विभक्तौ' इति नुम्। **अभिभवितृणी**। शौ 'नपुंसकस्य झलचः' इति 'नुमि सर्वनामस्थाने चासंबुद्धौ' इति दीर्घे **अभिभवितॄणि**। अयं नुम् 'वृद्ध्यौत्वगुणेभ्यो नुम् पूर्वविप्रतिषेधेन' इति 'ऋतोङि' इति गुणं बाधते॥

तृतीयाऽजादौ 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति समानायामाकृतौ भाषितपुंस्कस्येगन्तस्य नपुंसकस्य पुंवद्भावविधानात् पुंसीव पक्षे नुमभावात् अभिभवित्रा, अभिभवितृणा इत्याद्युभयमपि भवति। आमि 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति नुटि 'नामि' इति दीर्घः ।।

भवतीति भावः—'भवतेश्च' इति वक्तव्यात्पक्षे णः । तस्याभावे 'अज्विधिः सर्वधातुभ्यः' इत्यचि— भवः ।

आशितो भवत्यनेन इति आशितम्भवः ओदनः, आशितस्य भवनं आशितम्भवः—'आशिते भुवः करणभावयोः' इति खच् , उपपदसमासः । 'अरुर्द्विषदजन्तस्य मुम्' इति खिदन्ते उत्तरपदे अजन्तस्य पूर्वस्य अन्त्यादचः परो मुमागमः ।

आढ्यम्भविष्णुः आढ्यम्भावुकः—अनाढ्य आढ्यो भवतीत्यर्थे आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्व्यन्तेषूपपदेषु 'कर्तरि कारके खिष्णुच्खुकञौ' इत्येतौ स्याताम् । उभयत्र खित्वात् पूर्ववत् मुम् । खुकञो ञित्त्वाद्वृद्धिः । सुभगादिष्वप्येवमुदाहार्यम् ॥

भविष्णुः—'भुवश्च' इति तच्छीलतद्धर्मतत्साधुकारिष्विष्णुच् । अस्य भाषाविषयत्वं चान्द्रा इच्छन्ति । भाष्यादौ छान्दसत्वमेव स्पष्टम् । तच्छीलादौ तच्छब्देन धात्वर्थ उच्यते । तत्र फलनिरपेक्षप्रवृत्तिः[1] तच्छीलः। धात्वर्थः कुलक्रमागतो धर्मो यस्य स तद्धर्मा । धात्वर्थे सकृदपि यः साधु करोति स तत्साधुकारी ॥

भूष्णुः—'ग्लाजिस्थश्च ग्स्नुः' इत्यत्र चकारादस्मादपि ग्स्नुः गित्वान्न गुणः । अत एव 'श्र्युकः किति' इतीटो निषेधः ॥

---

[1] ना....निरापेक्षप्रवृत्तिधात्वर्थकः

**भावुकः**—'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इति तच्छीलादावुकञ् । ञित्त्वाद्वृद्धिः ॥

**परिभवी**—'जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च' इति तच्छीलादाविनिः । इकारो नकारपरित्राणाय । वासरूपविधिना परिपूर्वादप्युकञ् भवति । **परिभावुकः** इति ॥

**विभूः**—नाम कश्चित्, **प्रतिभूः** धनिकाधमर्णयोः मध्यस्थः । 'भुवः संज्ञान्तरयोः' इत्यनयोः गम्यमानयोः क्विप् । अन्तर-शब्देन धनिकाधमर्णयोर्मध्यस्थ उच्यते । संज्ञान्तरे स्वभावादुप-सर्गनियमः । किर्त्त्वान्न गुणः । इकारो वेरिति सामान्यार्थः । पकारस्तदविघातार्थः । वकारस्य 'वेरपृक्तस्य' इति लोपः ॥

**विभुवौ**—इत्यदौ 'ओस्सुपि' इति धातोरवयवः संयोगो यस्मादुवर्णात्पूर्वो नास्ति तदन्तस्यानेकाचोऽङ्गस्य अजादौ सुपि यण् इति प्राप्तस्य यणो 'न भूसुधियोः' इति निषेधादुवङ् ॥

वर्षासु भवतीति **वर्षाभूः**, **वर्षाभ्वौ**, **वर्षाभ्वः** पूर्ववत्क्विप् । 'संज्ञायाम्' अस्यां सप्तम्यन्तं स॰ स्यत इति तत्पुरुषः । 'क्विप्च' इति सोपपदनिरुपपदसाधारणे सर्वधातुविषये क्विप्युपपदसमासो वा । 'वर्षाभ्वश्च' इत्यजादौ यण् । चशब्दो दृन्कारपुनःपूर्वस्य च भुवो यणर्थः । दृन्भूशब्दो 'दृन्भू' इति निपातितः'। अत्र तु भूशब्दस्यानर्थकत्वान् 'न भू सुधियोः' इत्यत्र ग्रहणाभावः सिद्ध इति कैयटे । तेन 'ओस्सुपि' इत्येव यण् सिद्ध इत्यर्थः । दृम्भू इति मान्तमेके पठन्ति । अनुस्मृतौ कारशब्दस्य स्थाने करशब्दः प्रयुज्यते ॥

---

[1] मु....'ओस्सुपि' इत्यस्याप्रवृत्तौ 'इकोयणचि' इत्येव यण्सिद्ध :।

दृन्पुनःकरवर्षासु भुवः ।

इति । कारशब्दस्यैकदेशविकृतस्यानन्यत्वात् सिद्धमिति तद्विवृतौ । अत्र क्षीरस्वामिसुभूतिचन्द्रप्रभृतयो भेके वर्षाभूशब्दं ह्रस्वान्तं प्रतिपद्यन्ते । अत एव स्त्रियां 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी ढुली' इति 'भुवश्च' इति उकारान्तलक्षणं ङीषं पठन्ति । 'वर्षाभ्वश्च' इति अत्र वर्षासु भवतीति वर्षा वा भवते प्राप्नोतीति वर्षाभूरोषधिविशेष इत्यर्थविशेषमभिदधानस्य कैयटकारस्यायमेवाशयो लक्ष्यते । तथा भागुरिरपि ह्रस्वान्तं मन्यते । यथाऽऽह च—

भार्या भेकस्य वर्षाभ्वी शृङ्गी स्यान्मद्गुरस्य तु[1] ।
शिली गण्डूपदस्यापि कच्छपस्य ढुलिस्स्मृता ॥

इति । यादवप्रकाशस्तु भेकेऽप्युकारान्तमाह—

भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे न षण् ।

इति । तथा सुबोधिनीकारोपि—'भुवश्च' इत्युदन्तात् ङीब्विधानात् वर्षाभ्वीति पाठो न युक्तः ; युक्तस्तु पाठो—वर्षाभूः कमठो ढुलिः । इति । एवमेवोक्तं प्रक्रियारत्नेऽपि । वर्षासु प्रावृषि भवतीति वर्षाभूः मण्डूकः पुंस्त्री । तेनाख्याख्यत्वान्न ह्रस्वादय[2] इति नदीसंज्ञायामाख्याग्रहणं नियतस्त्रीलिङ्गपरिग्रहार्थमिति तन्मतम् । कैयटेऽप्येवमुक्तम्—"आख्याग्रहणसामर्थ्यान्नियम आश्रीयते स्त्रियमेव यावाचक्षाते न तु लिङ्गान्तरयुक्तमपीत्यर्थः" इति । पुनश्च तत्र "इण्वशनिप्रभृतीनामुभयलिङ्गानां पट्वादीनां च गुणवचनत्वात्सर्वलिङ्गानां स्त्रीविषयत्वाभावात् स्त्रियां

---

[1] च । [2] ह्रस्वाद्या ।

वृत्तौ नदीसंज्ञा न प्राप्नोति, एवं तर्हि ‘ङिति ह्रस्वश्च’ इत्यत्रैवंविधो नियमो नाश्रीय ते केवलस्य स्त्रीशब्दस्यानुवर्तनादित्यदोषः” इति ॥

हरदत्तस्तु पदान्तरमनपेक्ष्य स्त्रीवचनानां ग्रहणार्थमाख्याग्रहणं न तु नियतस्त्रीवचनानामित्याह । यदाह—“पदान्तरमनपेक्ष्य स्वयमेव यौ स्त्रियमाचक्षाते इत्याश्रीयते इष्वशनिप्रभृतीनामुभयलिङ्गानां शब्दार्थ एव स्त्रीत्वमिति संज्ञा भवति । एवं पटुशब्दप्रभृतीनां गुणवचनानामपि शब्दार्थ एव स्त्रीत्वम् । तथा च पटुशानीयतामित्युक्ते स्त्रियमप्यानीय कृती भवति” इति । पुनश्चैवमाह—नियतस्त्रीवचनानां ग्रहणार्थमाख्याग्रहणमिति वदतां आङ्पूर्वाद्ध्यायतेः क्विपि संप्रसारणे आध्यै ब्राह्मण्यै अत्रापि[1] न स्यात् । तस्मात्पूर्व एव प्रकार आश्रयणीयः । कथं तर्हि प्रत्युदाहरण ‘ग्रामण्ये स्त्रियै’ ‘खलप्वे स्त्रियै’ इति ? उच्यते—क्रियाशब्दत्वेऽप्यनयोः पुंसि मुख्या वृत्तिः पुंसामेव खल्विदमुचितं यदुत ग्रामनयनं नाम । एवं खलपवनमपि । आध्यानं तु स्त्रीपुंससाधारणमिति विशेष इति । न्यासोद्योतादावप्येवमुक्तम् । वृत्तिकारस्याप्ययमेव पक्षोऽभिमतः । यदाह—आख्याग्रहणं शब्दार्थे स्त्रीत्वे यथा स्यात् पदान्तरद्योत्ये मा भूत् इति । प्रक्रियारत्ने त्वबीशब्दो नित्यस्त्रीवचन इति नदीसंज्ञासिद्धिरुक्ता । एवं च हरदत्तादिमते वर्षाभूशब्दस्य भेक्यभिधानेऽपि नदीसंज्ञया भाव्यमिति तन्निबन्धनानि ह्रस्वादीनि[2] भवन्ति । कैयटकारसुभूतिचन्द्रादीनां मते नदीसंज्ञायां न विवादः, उकारान्तस्यौषधिविशेषवाचित्वेन नियतस्त्रीविषयत्वात् । एवं च प्रक्रियारत्नोक्तो नदीसंज्ञाऽभावः ‘त्यजेदेकं कुलस्यार्थे’ इति न्यायेन त्याज्यः । षष्ठीबहुवचने तु परत्वान्नित्यत्वाच्च नुटि कृते तस्य विभक्ति-

---

[1] मु—अत्रापि भाष्यकारोदाहृते ।

[2] ‘न ह्रस्वादीनि’, ‘कथं ह्रस्वादीनि’ इति लिखितकोशपाठौ ।

भक्तत्वात् 'एकाजुत्तरपदे णः' इति नित्यं णत्वम् . एकाच् उत्तरपदं यस्य तस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य पूर्वपदस्थान्निमित्तात्परस्य तस्य नित्यं ण इति सूत्रार्थः ॥

**विभुः । प्रभुः । सम्भुः**—'विप्रसम्भ्योड्वसंज्ञायाम्' इति व्यादिभ्यः परस्माद्भुवो डुप्रत्ययः । डित्वाट्टिलोपः ॥

**शम्भुः**—'मितद्र्वादिभ्य उपसङ्ख्यानम्' इति डुः । सुखरूपो भवतीत्यर्थः । यद्वा—अन्तर्भावितण्यर्थो भवतिः । तेन सर्वेषां सुखं भावयतीत्यर्थः । यद्वा—शमेर्ण्यन्तात् 'अन्येभ्योऽपि दृश्यते' इति क्विचि शं शमयिता रोगाणां भवतीति शम्भुः । श्रूयते च—

भिषक्तमं त्वा भिषजां शृणोमि[1] ।
त्वादत्तेभीरुद्र शन्तमेभिः शतं हिमा अशीय भेषजीभिः[2] ।
अध्यवोचदधि वक्ता प्रथमो दैव्यो भिषक्[3] ।

इति । शं भवत्यस्मादिति व्युत्पत्तिरपादाने डुप्रत्ययाभावाच्चिन्त्या ॥

**विभ्वी । प्रभ्वी । सम्भ्वी**—'भुवश्च' इति भवतेरुदन्तस्यानुपसर्जनस्य स्त्रियां ङीप् । उपसर्जनत्वे तु अतिविभुः ब्राह्मणी इति ङीप् न भवति ॥

भविष्यतीति **भावी**—'भुवश्च' इत्यौणादिक इनिर्णिद्वच्च । तेन वृद्धिः । अयं च 'भविष्यति गम्यादयः' इति गम्यादिषु पाठात् भविष्यत्कालविषयः ॥

---

[1] ऋक्स २-३३-४ । [2] ऋक्सं २-३३-२ । [3] तैत्ति ४-५-१ ।

भावः—'श्रीणीभुवोनुपसर्गे' इति अकर्तरि कारके भावे च घञ् । उपसृष्टात्तु 'ऋदोरप्' इत्यप्—प्रभवः इति ।। ऋदिति दकारो मुखसुखार्थ इति ओरिति उकार ऊकारमपि गृह्णाति । प्रभावः—इत्यत्र तु प्रकृष्टो भावः प्रभाव इति प्रत्ययार्थ एव प्रशब्देन विशेष्यते न प्रकृत्यर्थ इति क्रियायोगाभावादनुपसर्गत्वात् घञ्सिद्धिः । विभावानुभावशब्दौ विभावयत्यनुभावयतीति ण्यन्तादचि व्युत्पाद्यौ ॥

परिभवः, परिभावः, परीभावः—'परौ भुवोवज्ञाने' इति पक्षे घञपौ । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति घञन्त उत्तरपदे पूर्वोपसर्गस्य वा दीर्घोऽमनुष्ये विषये ।।

भूतिः—'स्त्रियां क्तिन्' इत्यकर्तरि कारके भावे च सर्वधातुभ्यः क्तिन् । 'मन्त्रे वृष' इत्यादिना भुवः क्तिन्वचनमस्य नित्त्वात् 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वेप्राप्ते उदात्तार्थम् । न तु भाषायां प्रयोगनिवृत्त्यर्थम् । प्रयुज्यते च भाष्ये—सर्व इमे स्वभूत्यर्थं प्रवर्तन्त इति ।।

भूः—'सम्पदादिभ्यः क्विब्वा वक्तव्यः' इति क्विप् । क्विपः सर्वस्य लोपः ।

. भवत्यस्मिन्ननेनेति वा भावः—'पुंसि संज्ञायां घः प्रायेण' इति पुँल्लिङ्गयोः करणाधिकरणयोर्घः । प्रायग्रहणं क्वचिदसंज्ञायामपि यथा स्यादिति ।।

अनाढ्येन अनायासेन आढ्येन भूयते ईषदाढ्यंभवं भवता स्वाढ्यंभवं भवता । अनाढ्येन दुःखेनाढ्येन भूयते दुराढ्यंभवं भवता । 'कर्तृकर्मणोश्च भूकृञोः' च्व्यर्थविषयकर्तृकर्मवचनयोश्चशब्दादीषदादिषु चोप-

पदेषु भूकृञोः खलिति खल् । तत्र तु भुवोऽकर्मकत्वात्कर्तर्युपपदे भावे प्रत्ययः। करोतिस्तु कर्मणि स्वभावात्। कृच्छ्रग्रहणं तु दुरो विशेषणम् अकृच्छ्रग्रहणं त्वितरयोः। खित्त्वान्मुम् । नन्वत्र धात्वर्थमात्रं विशिंषत ईषदो गत्योरपि सुदुरोश्च कथं व्यवहितप्रयोगः । न च मुमर्थात् खित्करणादिति वाच्यम् , 'खित्यनव्ययस्य' इत्यत्र कृद्ग्रहणपरिभाषाया उपस्थानात्सगतिके खिदन्त उत्तरपदे मुमर्थत्वस्य सम्भवात् । न चैवं वाच्यं हृदयस्य 'हृल्लेख' इत्यत्राण्ग्रहणादेवाणन्तस्य ग्रहणे सिद्धे पुनर्लेखग्रहणादुत्तरपदाधिकारे[1] प्रत्ययग्रहणपरिभाषाया अप्रवृत्तेर्ज्ञापनात्तदभावात्तद्विषया कृद्ग्रहणपरिभाषा कथं प्रवर्तत इति । यतो नुम्यव्ययात्परस्य खितोऽसम्भवात्तदन्तस्य च सम्भवादनव्ययस्येति निषेधसामर्थ्यादुत्तरपदाधिकारेऽपीह प्रत्ययग्रहणपरिभाषया अवश्यमुपस्थातव्यम् । ततश्च तद्विषया कृद्ग्रहणपरिभाषाऽप्युपस्थास्यते । एवं तर्हि भाष्ये ईषदाढ्यम्भवमित्यादेः उदाहृतत्वात् प्रयोगनियमः । अवत्सीयादौ प्रधानभूतछप्रत्ययार्थेनान्वीयमानस्य नञश्छान्तेन समासवत् खिदन्तार्थेनान्वीयमानस्यापीषदादेः खिदन्तान्तेन समासः । [2]कैय्यटे तु खित्करणादेव कर्तृकर्मणोः पूर्वप्रयोग उक्तः । तस्यायं भावः— अनव्ययस्य इति निषेधसामर्थ्यादेव तदन्तत्वलाभः, न त्वस्मादेव प्रतिषेधादिहोत्तरपदाधिकारेऽपि ज्ञापितया प्रत्ययग्रहणपरिभाषया, यतस्तद्विषया कृद्ग्रहणपरिभाषा प्रवर्तेतेति ॥

**मुखतोभूत्वा, मुखतोभूय, मुखतोभावम्**, 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इति तस्प्रत्ययान्ते स्वाङ्ग उपपदे क्त्वाणमुलौ । तत्र 'तृतीया-

---

[1] ........धिकारोऽपि. [2] मु — खिदन्तान्तेनापि सः ।

प्रभृतीन्यन्यतरस्याम्' इति 'उपदंशस्तृतीयायाम्' इत्येवमादीनामुपपदानाममैव तेन चान्येन च तुल्यविधानानाममन्तेन समासविकल्पनात् मुखतोभावं इत्येकं पदं, द्वे वा पदे। क्त्वान्तेनापि तृतीयाप्रभृतीनामुपपदानां 'क्त्वा च' इति समासविकल्पनात्पक्षे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यबादेशः। अत्रानञिति नञ्सदृशमव्ययं परिगृह्यते। 'कृन्मेजन्तः' 'क्त्वातोसुन्कसुनः' इति णमुल् क्त्वान्तयोरव्ययत्वात्सुपो लुक्। स्थानिवत्त्वेन ल्यबन्तमव्ययम्॥

विनाभूय, विनाभूत्वा विनाभावम्, नानाभूय, नानाभूत्वा, नानाभावम्, एकधाभूय, एकधाभूत्वा, एकधाभावम्—'नाधार्थप्रत्यये च्व्यर्थे' इति नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलौ इति तौ। नानाशब्देन 'विनञ्भ्यां नानाञौ नसह' इति विहितौ नानाञौ उच्येते। धाशब्देन 'सङ्ख्याया विधार्थे धा' 'अधिकरणविचाले च' इति विहितो धाप्रत्यय उच्यते। तत्र विधा नाम प्रकारः सामान्यस्य भेदको विशेषः। अधिकरणविचालोपि अधिकरणं द्रव्यं तस्य विचाल सङ्ख्यान्तरापादनं एकस्यानेकीकरणं अनेकस्यैकीकरणं वा, तदेकधाभूयेत्यादेरयमर्थः—अनेकं द्रव्यमेकंभूत्वेति। एकस्यानेकीकरणं द्विधाभूयेत्यादौ द्रष्टव्यम्। ये तु धाप्रत्ययस्यादेशा 'एकाद्धोध्यमुञन्यतरस्याम्' 'द्वित्र्योश्च धमुञ्' 'एधाच्च' इति विहिता ध्यमुञादयः तेषामपि स्थानिवत्त्वेन धाग्रहणेन ग्रहणात् तदन्ते चोपपदे क्त्वाणमुलौ भवतः इति ऐकध्यंभूय इत्याद्युदाहार्यम्। नाधार्थेत्यत्र अर्थग्रहणं तु 'धमुञन्तात्स्वार्थे डदर्शनम्' इति यो डप्रत्ययः तदर्थं, स हि स्वार्थिकत्वाद्धार्थः। तथा नाञर्थमपि। अन्यथा सानुबन्धकत्वादयं नाशब्देन न गृह्येत॥

तूष्णीम्भूय, तूष्णीम्भूत्वा, तूष्णीम्भावम् । 'तूष्णीमि भुवः' इति क्त्वाणमुलौ ।।

अन्वग्भूय, अन्वग्भूत्वा, अन्वग्भावम् । 'अन्वच्यानुलोम्ये' इति क्त्वाणमुलौ । आनुलोम्यमनुकूलता । नाधेत्यादियोगत्रयविषयेऽपि तृतीयाप्रभृतीनि' इति समासविकल्पो द्रष्टव्यः ।।

भूतो घटः, भूतं घटेन अत्र 'निष्ठा' इति भूते विहितस्य क्तस्य गत्यर्थादिपरत्वे 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इति कर्तरि चकाराद्भावकर्मणोश्च विधानात् भुवश्चाकर्मकत्वात्कर्तृभावावर्थौ. अयं च 'नपुंसके भावे क्तः' 'ल्युट् च' इति क्तल्युटौ न बाधते यतस्तयोर्धात्वर्थस्य सिद्धता विषयः । अस्य तु धात्वर्थमात्रम् इति विषयभेदः । तेन घटस्य भूतं भवनमिति भवतः । क्तयोगे कर्तरि षष्ठ्या 'न लोकाव्यय' इति निषेधो न भवति, 'नपुंसके भावे क्त उपसंख्यानम्' इति तद्विधानात् । शेषविज्ञानाद्वा तत्सिद्धिः ।।

इदमेषां भूतम् । 'क्तक्तवतू निष्ठा' 'निष्ठा' इति ध्रौव्यादिभ्यो विहितस्य क्तस्य 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इत्यत्राधिकरणमर्थः : चकारो यथाप्राप्तानुज्ञानार्थः । तेन ध्रौव्यार्थेभ्यः कर्तृभावाधिकरणेषु गत्यर्थेभ्यः कर्मकर्त्रधिकरणेषु कर्माविवक्षायां भावे च । प्रत्यवसानार्थेभ्यः कर्माधिकरणयोः पूर्ववदत्रापि भावे[1] । ध्रौव्यार्था अकर्मकाः । प्रत्यवसानार्था अभ्यवहारार्थाः । 'अधिकरणवाचिनश्च' इत्यधिकरणे क्तयोगे षष्ठी । 'अधिकरणवाचिना च' इत्यस्याः समासनिषेधः ।।

---

[1] मु—भवति ।

**भवत्यनेनात्रेति वा भवनम्**—अस्य कालसामान्यविषयत्वात् भूतविषयेणाधिकरणक्तेन न बाधः। परिभवनमित्यत्र 'कृत्यचः' इति उपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्याच उत्तरस्य नस्य विधीयमानं णत्वं 'न भाभूपूकमिगमिप्यायीवेपाम्' इति निषिध्यते। अत्र 'ण्यन्तानां च भादीनामुपसंख्यानम्' इति वचनात्परिभावनमित्यत्रापि णत्वं न भवति॥

अथोणादयः—**दृम्भूः** तरुः। सर्पजातिभेद इति पुरुषकारे। 'अन्धूदृम्भूजम्भूकपेल्लूकर्कन्धूदिधिषूः' इति दृढशब्दे उपपदे कूप्रत्ययान्तो निपातितः। उपपदस्य च दृम्भावोऽस्मादेव निपातनात्। केचिदुपपदं नान्तं पठन्ति। अजादावस्य यणिति वर्षाभूप्रस्ताव एवावोचाम। क्वचिदुणादिवृत्तौ 'दृभी ग्रन्थे' इत्यस्मात्कूप्रत्यये निपातनमित्युक्तम्। तत्राप्ययमूकारो न धातोरित्युवङोऽप्रसङ्गाद्यणेवेति रूपे न भेदः॥

**भवनं गृहम्**—'बहुलमन्यत्रापि' इति युच्॥

**भुवनम्**— 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति क्युन्। भाषायां बहुलवचनात्साधुरिति 'वा भुवनं' इत्यत्र हरदत्तः॥

**भूमिः**—'भुवः कित्' इति मिन्प्रत्ययः॥

**कृष्णभूमः, उदग्भूमः, पाण्डुभूमः**—'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यत्र 'अच्' इति योगविभागात् अच् समासान्त। तथा च श्लोकवार्तिकम्—

**कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः॥** इति॥

**भूरिः**—'आदिशादिभूशुभिभ्यः क्रिन्' इति क्रिन्॥

अद्भुतः—'अदि भुवो डुतच्' इति डुतच्। एवं प्रसिद्ध-प्रयोगा उणादिप्रत्ययान्ताः प्रदर्शिताः। अतः परमप्येवं वक्ष्यते ॥

सूत्रवार्तिकभाष्येषु छान्दसावेव केवलौ।
कानच्क्वसू प्रतीयेते तेन नात्र प्रपञ्चितौ ॥

केचिदाहुः क्वसोः कित्वाज्ज्ञापकादनुमीयते।
अस्ति प्रयोगो भाषायामित्येवं प्राज्ञमानिनः ॥

तथा हि छान्दसत्वेऽस्य छन्दस्युभयथेत्यतः।
सार्वधातुकसंज्ञत्वान्ङित्वे सिद्धेऽतिदेशतः ॥

अनुनासिकलोपस्स्यात् संयोगान्तेषु धातुषु।
अत्रापि हि[1] लिटः कित्वे संयोगाल्लिट्किदित्यतः ॥

सिद्धे कृतः ककारोऽसौ भाषायामर्थवानिति।
तदसत्तेरुरित्यादौ यथा लिटि गुणः क्विति ॥

ऋच्छत्यृतामितीहापि तितीर्वति गुणो भवेत्।
स मा भूदिति कित्वस्य भाष्ये फलसमर्थनात् ॥

एध वृद्धौ ॥ २ ॥

कत्थान्ता उदात्ता अनुदात्तेतः। एधते। एधसे। एधे।

एधमानः। एधाञ्चक्रे। एधाम्बभूव। एधामास। 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययोऽमन्त्रे। 'दीर्घं च' इति दीर्घस्य गुरुसंज्ञा। 'करोतेराम्प्रत्ययवत्' इति नित्यं तङ् ॥

---

[1] मु. अन्यत्रापि।

एधिता । एधितासे । एधिताहे । 'ह एति' । एधिष्यते । एधिष्यसे । एधिष्ये । एधिष्यमाण. । 'लटस्सद्वा' ॥

एधताम् । एधस्व । एधै । 'आमेत:, । 'सवाभ्यां वामौ' 'एत ऐ' ॥

ऐधत । ऐधथाः । ऐधे । 'आडजादीनाम्' इत्यजादेर-ङ्गस्य लुङ्लङ्लृङ्क्षु आडागमः इत्याट् । टित्वादादौ । 'आटश्च' इति वृद्धिः ॥

एधेत । एधेथाः । एधेय । आशिषि । एधिषीष्ट । एधिषीष्ठाः । एधिषीय ॥

ऐधिष्ट । ऐधिष्ठाः । ऐधिढ्वम् । ऐधिषि । 'धि च' इति सलोपे । इण्णन्तमङ्गमिति 'इण्षीध्वं लुङ्लिटान्धोऽङ्गात्' इति धकारस्य मूर्धन्यः । अत्र हरदत्त एवं मूर्धन्यमुक्त्वा पक्षान्तर-माह—अन्ये त्विटो विभाषाया वक्ष्यमाणत्वात् गोबलीवर्दन्यायेन तद्व्यतिरिक्तमिणन्तमिह गृह्यत इति वदन्त ऐधिध्वं इत्यादौ ढत्वं नेच्छन्ति ॥

ऐधिष्यत । ऐधिष्यथाः । ऐधिष्ये ॥

भावे लट्—लोट्—लङ्विध्यादिलिङ्क्षु यगुदाहार्यः । एध्यते भवता । इत्यादि । लुङि तु चिणि 'चिणो लुक्' इति तशब्दस्य लुकि ऐधि भवता इति । शेषेषु कर्तृवद्रूपम्

सन्यजादित्वात् द्वितीयस्यैकाचो द्विर्वचनेऽभ्यासकार्यम् । 'पूर्व-वत्सनः' इति तङ् । एधिधिषते इत्यादि सर्वत्र प्रकृतिवत्[1] ।

---

[1] मु—'एधिधिष्यते इत्यादि कर्तृवत्' इत्यधिकं दृश्यते ।

न च स्थादिषु चिण्वदिट्पक्षे वृद्धौ युकि रूपान्तरमपि स्यादित्याशङ्क्यम् । ण्यल्लोपेत्यादिनाऽतो लोपेन वृद्धेर्बाधस्योक्तत्वात् ॥

एधयते सस्यम्—'णिचश्च' इति कर्त्रभिप्राये तङ् । अस्मिन्नुपपदेन प्रतीयमाने 'विभाषोपपदेन प्रतीयमाने' इति परस्मैपदमपि भवति स्वं सस्यमेधयति इति । अण्यन्ते चित्तवत्कर्तृके तु 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदमेव पुत्रमेधयति इति । विभाषोपपदादपि परत्वादिदमेव भवति तेन स्वं पुत्रमेधयति इत्येव । 'गतिबुद्धि' इति सर्वत्र प्रयोज्यस्य कर्मत्वम् ॥

एधयाञ्चक्रे. चकार. बभूव. आस, 'अयामन्त' इति णेरयादेशः । अत्र यदा प्रकृतेः चित्तवत्कर्तृकत्वेन नित्यं परस्मैपदं तदा कृञोपि 'पूर्ववत्कृञोऽनुप्रयोगस्य' इति कल्पितेन योगेन तथैव ॥

एधयिता । एधयितासे ॥ एधयिष्यति । एधयिष्यते ॥ एधयतु । एधयताम् ॥ ऐधयत् । ऐधयत ॥ एधयेत् । एधयेत ॥ आशिषि—एध्यात् । एधयिषीष्ट ॥ यासुटि अनिडाद्यार्धधातुकत्वात् णिलोपः 'अकृत्सार्वधातुकयोः' इति दीर्घस्य पूर्वविप्रतिषेधेन बाधकः । ध्वमीटि गुणायादेशयोः इणःपर इडिति 'विभाषेटः' इति मूर्धन्यविकल्पः ॥

ऐदिधत् । ऐदिधत । 'णिश्रि' इति चङि णिलोपस्य 'द्विर्वचनेऽचि' इति द्विर्वचननिमित्तेऽचि योऽजादेशः स द्विर्वचने कर्तव्ये स्थानिरूपं प्रतिपद्यत इति 'चङि' इति द्विर्वचने स्थानिवत्त्वात् 'अजादेर्द्वितीयस्य' इति धिशब्दो द्विरुच्यते । इदं च 'णौ चङि' इत्युपधा-

ह्रस्वाद्वृद्धिरङ्गाद्यप्युत्तरकालं द्रष्टव्यम् । अत्र च लिङ्गं ओणेः ऋदित्करणम् । तद्धि मा भवानोणिणत् इत्यत्र 'नाग्लोपि' इति चङि ह्रस्वनिषेधार्थं, पूर्वं तु द्विर्वचने ह्रस्वभाविन्युपधा नेति किं तन्निषेधेन । तेन मा भवानिदिधत् इति च भवति । 'न माङ्योगे' इत्याटो निषेधः ।

कर्मणि लुङ्येकवचने चिण् । अत्र सिचीङ्गुणायादेशाः । ऐधि । ऐधयिषाताम् इत्यादि । ध्वमि 'धिच' इति सलोपे णेर्गुणायादेशयोः इणः परत्वादिटो 'विभाषेटः' इति वा मूर्धन्यः । अन्येषु लेषु कर्तृव-द्रूपम् । लिटि अनुप्रयोगे नित्यस्तङुदाहार्यः । स्यादिषु पक्षे चिण्वदिटि तस्य 'असिद्धवदत्र' इत्यसिद्धत्वाण्णिलोपे एधिष्यते इत्यादि प्रकृति-वद्रूपाण्यपि पक्षे द्रष्टव्यानि । न च ध्वमि णेरिणः पर इडिति तल्लोपात्पूर्वं 'विभाषेटः' इति रूपभेदस्य प्रसङ्गः । नित्यत्वादन्तरङ्गत्वात्पूर्वत्रासिद्ध-त्वाच्च पूर्वमेव णेर्लोपात् । कर्मकर्तरि यक्चिणोर्विषये तयोः 'णिश्रन्थि' इति निषेधाच्छप्सिचोः कर्तृवद्रूपम् । स्यादिषु कर्मवत् । वत्करणात्स्वा-श्रये भावे लकारे सर्वत्र कर्मवत् । कर्तरि तृतीया विशेषः—एध्यते स्वेनैव इत्यादि ॥

प्रैधते – 'एत्येधत्यूठ्सु' इति वृद्धिः । एजादावेणि धातावेधतौ चावर्णान्तादुपसर्गात्परे ऊठि चावर्णात् पूर्वपरयोरेकादेशो वृद्धिरिति सूत्रार्थः । इयं च वृद्धिरेत्योरेङि पररूपस्यापवाद इत्यवर्णान्तोपसर्गलाभः । ऊठि त्वाद्गुणस्य । अत्र वृत्तौ एङ्ग्रहणमेतेरेव विशेषणं नैधतेरव्यभिचारा-दिति । अत्र प्रदीपकृत्—मा प्रेदिधत् इत्यत्र व्यभिचारसम्भवान्नैतत्सार-मित्याह । इदमेव त्वसारं, ण्यन्तस्य शब्दान्तरत्वादेधतिग्रहणेनाग्रहणात् । अत एव हि 'न भाभूपूकमि' इत्यत्र 'ण्यन्तानां च भादीनामुपसङ्ख्या-

नम्' इत्युक्तम् । वक्ष्यन्ति च तत्र न्यासकारादयः 'शब्दान्तरत्वात् ण्यन्तानां न प्राप्नोति तस्मादुपसङ्ख्यान' इति । स्वयं च तत्रैव वक्ष्यतीति पूर्वापरविरोधं स एव प्रष्टव्यः' । किञ्च ण्यधिकस्यापि ग्रहणे 'उपसर्गात्सुनोति' इत्यत्र अभिषावयति इत्यत्र ण्यन्तेनाभियोगात् सुनोतिं प्रत्यनुपसर्गत्वात् षत्वं न स्यादिति चोदयित्वा प्रेषणादिरिहाभिषवविषय इति सुनोतिं प्रत्युपसर्गत्वात् षत्वं सिद्धमिति भाष्यकारादीनां समाधानमनुपपन्नं स्यात् । अत एव हि वृद्धिविधौ हरदत्तः—'एङ्ग्रहणमेतैरेव विशेषणं न पुनरेधतेः' इति वृत्तिमुपादाय 'बाहुल्याभिप्रायेणैतदुक्तम् । मा प्रेदिधत् इत्यत्र व्यभिचारसम्भवादित्याहुः' इति मतान्तरेणाह ।।

**एधितः । एधितमनेन ।** इदमेषां **एधितम्** । 'क्तोऽधिकरणे च' इति क्तः । **एधः**—'असुन्' इत्यसुन् ।।

**स्पर्ध सङ्घर्षे ।। ३ ।।**

सङ्घर्षः पराभिभवेच्छा । पराभिभवस्य धात्वर्थेनोपसंग्रहात् अकर्मकत्वम् । उक्तं च—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ।।

इति । स्पर्धते । स्पर्धसे । स्पर्धे ।।

स्पर्धमानः । पस्पर्धे । पस्पर्धिषे । पस्पर्धे । 'शर्पूर्वाः खयः' अभ्यासस्य शर्पूर्वाः खयश्शिष्यन्ते अन्ये हलो निवर्तन्त इति पकारस्य शेषः ।।

स्पर्धिता । स्पर्धितासे । स्पर्धिताहे ।। स्पर्धिष्यते । स्पर्धिष्ये ।। स्पर्धताम् । स्पर्धस्व । स्पर्धै ।। अस्पर्धत । अस्पर्धथाः । अस्पर्धे ।।

स्पर्धेत । स्पर्धेथाः । स्पर्धेय ॥ आशिषि—स्पर्धिषीष्ट ॥

अस्पर्धिष्ट । अस्पर्धिष्ठाः । अस्पर्धिष्यत । अस्पर्धिष्यथाः । अस्पर्धिष्ये ॥

भावे—लट्लोड्विध्यादिलिङ्क्षु यकि स्पर्ध्यते ॥ स्पर्ध्यताम् ॥ अस्पर्ध्यत ॥ स्पर्ध्येत ॥ इति ॥

लुङि तशब्दे चिणि अस्पर्धि ॥ शेषेषु कर्तृवत् ॥

पिस्पर्धिषते ॥ पिस्पर्धिषांचक्रे ॥ पिस्पर्धिषिता ॥ इत्यादि । 'सन्यतः' इतीत्वमभ्यासस्य । 'पूर्ववत्सनः' इति तङ् । आर्धधातुके अतो लोपः । विध्यादिलिङ्यतोलोपाभावाल्लिङस्सलोपे गुणवल्लिलोपयोः पिस्पर्धिषेत ॥

भावे यक्चिणौ तु विशेषः । पिस्पर्धिष्यते ॥ इत्यादि ॥

पास्पर्ध्यते—'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घो यङि तल्लुकि च ॥

पास्पर्धांचक्रे ॥ पास्पर्धिता ॥ इत्यादि । तत्रार्धधातुके 'यस्य हलः' इति हल उत्तरस्य यशब्दस्य लोपः । स च 'आदेः परस्य' इति यकारस्य । अकारस्यातो लोपः । भावे तास्यादिवत् । यक्यप्यतोलोपयलोपयोः कर्तृवत्सर्वत्र रूपम् । पास्पर्ध्यते । इत्यादि ॥

लुङि तु चिणि ॥ अपास्पर्धि इति भवति । सन्यङोस्तास्यादौ चिण्वदिटि न विशेषः, अतो लोपेन वृद्धेर्बाधादित्युक्तम् ॥

यङ्लुकि—'अदादिवच्च' इति शपो लुक् । 'झषस्तथोर्धोऽधः' झष उत्तरयोस्तकारथकारयोः दधातिं वर्जयित्वा धकार इति धत्वे

'झलां जश् झशि' इति जश्त्वसान्तरम्याद्दकारः । एवं च वचनान्तरेष्वपि । **पास्पर्धि । पास्पर्धः । पास्पर्धति ।** 'अदभ्यस्तात्' इत्यद्भावः । **पास्पर्त्सि ।** 'खरि च' खरि च परे झलां चर इति तत्वम् ॥ **पास्पर्धः । पास्पर्ध । पास्पर्धि । पास्पर्धः ।** सर्वत्र हलादेः पितस्सार्वधातुकस्य 'यङो वा' इति ईडुदाहार्यः पास्पर्धीति इत्यादि ॥

**पास्पर्धाञ्चकार ।** 'पूर्ववत्सनः' 'कृञोऽनुप्रयोगस्य' इति नित्यं परस्मैपदम् ॥

**पास्पर्धिता ॥ पास्पर्धिष्यति ॥ पास्पर्धु । पास्पर्धात् ।** तातङि 'ङिच्च पिन्न' इति स्थानिवत्त्वप्राप्तस्य पित्त्वस्य निषेधात् ईडभावः । **पास्पर्धाम् । पास्पर्धतु । पास्पर्धि । पास्पर्धात् । पास्पर्धम् । पास्पर्धानि ।** सेर्ह्यादेशे 'हुझल्भ्यो हेर्धिः' इति धिभावः । हेः पित्त्ववचनादीडभावः ॥

**अपास्पर्त् ।** इतश्च लोपे हल्ङ्यादिलोपे च 'झलां जशोऽन्ते' इति जश्त्वे 'वाऽवसाने' इति चर्त्वे तकारः । तदभावे **अपास्पर्द् ।** 'रात्सस्य' इति नियमात्संयोगान्तलोपो न भवति । **अपास्पर्धाम् । अपास्पर्धुः ।** 'सिजभ्यस्त' इति जुस् । **अपास्पर्त्, अपास्पर्द् । अपास्पाः ।** सिपो हल्ङ्यादिलोपे पूर्ववज्जश्त्वे वा चर्त्वम् । तदभावे 'दश्च' इति सिपि परे वा रुः । 'रो रि' इति पूर्वरेफस्य लोपः । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति पूर्वस्याणो दीर्घः । 'ढ्रलोपे' इति ढकाररेफयोर्लोपनिमित्तयोः परयोरित्युच्यते । **अपास्पर्धम् । अपास्पर्ध्व । अपास्पर्ध्म ॥**

पास्पर्ध्यात् । पास्पर्ध्याताम् । पास्पर्ध्युः । यासुटो ङित्त्वेनापित्त्वादीडभावः ॥ आशिषि—पास्पर्ध्यात् । पास्पर्ध्यास्ताम् । असार्वधातुकत्वादीडभावः ॥

अपास्पर्धीत् । अपास्पर्धिष्टाम् । अपास्पर्धिषुः । अपास्पर्धीः । अपास्पर्धिषम् । 'अस्ति सिचः' इति पितो नित्यमीट् । 'इट ईटि' इति सिज्लोपे 'सिज्लोप एकादेशे सिद्धो वक्तव्यः' इति सवर्णदीर्घः । वदव्रजहलन्तस्याचः इति परस्मैपदपरे सिचि विहिता वृद्धिः 'नेटि' इति निषिध्यते । अपास्पर्धिष्यत् । इत्यादि ॥

भावे सर्वत्र यङन्तवद्रूपम् । पास्पर्ध्यते इत्यादि ॥

णौ—स्पर्धयति इत्यादि एधयतीतिवदुदाहार्यम् । लुङ्यनजादित्वात्प्रथमस्यैकाचो द्विर्वचनम् । 'संयोगे गुरु' इति संयोगपरस्य ह्रस्वस्य गुरुसंज्ञाविधानात् 'सन्वल्लघुनि' इतीत्वम् । 'दीर्घो लघोः' इति दीर्घश्च न भवति । गुरुसंज्ञया चाकडारीययाऽनवकाशया लघुसंज्ञा बाध्यते ॥

कर्मणि—यक्चिणोर्विषये णिलोपे स्पर्ध्यते इत्यादि ॥ प्रकृतौ भावरूपाण्युदाहार्याणि । अन्यत्र स्पर्धयाञ्चक्रे इत्यादि कर्तृवत् । लुङि चङोऽभावाद्द्विर्वचनादौ सिचि अस्पर्धयिषाताम् इत्याद्युदाहार्यम् । ध्वमि 'विभाषेटः' इति मूर्धन्यविकल्पः । स्यादिषु चिण्वदिटि तस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वात् णिलोपे स्पर्धिष्यते इत्यादि प्रकृतिवद्रूपम् ॥

कर्मकर्तरि यक्चिणोर्निषेधात् शप्चङौ । स्पर्धयते इत्यादि कर्तृवन्नेयम् । अत्रापि स्यादिषु चिण्वदिट्पक्षे कर्मवत् । वस्कर-

णात्स्वाश्रये भावे लकारे सर्वं कर्मवत् । कर्तरि तृतीया विशेषः ।।

स्पर्धनः—'अनुदात्तेतश्च हलादेः' इति तच्छीलादौ युच् ।

स्पर्धा—'गुरोश्च हलः' इति गुरुमतो हलन्तात् स्त्रियामकारप्रत्ययः । वाऽसरूपेण क्तिन् 'अस्त्रियाम्' इति निषेधात् न भवति ।।

इदमेषां स्पर्धितम् । स्पर्धितमनेन । स्पर्धितः । 'क्तोऽधिकरणे च' इति कर्तृभावाधिकरणेषु क्तः ।

स्पर्धालुप्रयोगश्चिन्त्यः ।।

गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च ।। ४ ।।

आत्मयापनं[1] तत्साधनं च प्रतिष्ठा । लब्धुमिच्छा लिप्सा । एकत्र स्थापनं, सन्दर्भो वा ग्रन्थः । तत्राद्येऽकर्मकः, इतरयोस्सकर्मकः ।।

गाधते । गाधसे । गाधे । गाधमानः ।।

जगाधे । जगाधिषे । जगाधे ।।

गाधिता । गाधितासे । गाधिताहे ।। गाधिष्यते ।। गाधिष्यमाणः ।। गाधताम् । गाधस्व । गाधै ।। अगाधत । अगाधथाः । अगाधे ।।

गाधेत । गाधेथाः । गाधेय ।। आशिषि—गाधिषीष्ट ।।

अगाधिष्ट । अगाधिष्ठाः । अगाधिषि ।। अगाधिष्यत । इत्यादि ।।

---

[1] आत्मयापना । मु-स्थापना ।

भावकर्मकर्तृषु लड्लोड्लङ्विध्यादिलिङ्क्षु यकि— गाध्यते । गाध्यताम् ।। अगाध्यत ।। गाध्येत ।। इत्यादि ।। अन्येषु लेषु कर्तृवत् । लुङ्येकवचने तु चिणि **अगाधि** ।।

लिप्सायामार्थिकन्यायेनेष्यमाणप्रधानत्वात्तस्य च कर्मस्थत्वात् सनन्तवत् कर्मकर्तृत्वोपपत्तिः ।।

जिगाधिषते । जिगाधिषाञ्चक्रे । जिगाधिषिता । जिगाधिषिष्यते । जिगाधिषताम् । अजिगाधिषत । जिगाधिषेत । आशिषि— जिगाधिषिषीष्ट । अजिगाधिषिष्ट । अजिगाधिषिष्यत ।। इत्यादि सर्वत्राभ्यासकार्यम् । आर्धधातुके अतो लोपः ।।

भावकर्मणोर्यक्चिण्विषये जिगाधिष्यते । अजिगाधिषि । इत्यादि । कर्मकर्तरि यक्चिणोर्निषेधात् कर्तृवदेव ।।

जागाध्यते । जागाधाञ्चक्रे । जागाधिता । जागाधिष्यते जागाध्यताम् । अजागाध्यत । जागाध्येत । आशिषि—जागाधिषीष्ट । अजागाधिष्ट अजागाधिष्यत । सर्वत्राभ्यासस्य 'दीर्घोऽकितः' आर्धधातुकेऽतो लोपः, 'यस्य हलः' इति यलोपाल्लोपौ ।।

भावादिषु यक्यल्लोपयलोपयोः सर्वत्र कर्तृवद्रूपम् । लुङ्येकवचने तु **अजागाधि** इति चिण्विशेषः । सन्यङोश्चिण्वदिटि अतो लोपेन वृद्धिबाधात् न विशेष इत्युक्तम् ।।

यङ्लुकि 'झषस्तथोर्धो धः', 'झलां जश् झशि' **जागाद्धि** इत्यादि । सिपि 'एकाचो बशो भष्झषन्तस्य स्ध्वोः' इति धातोरवयवस्य झषन्तस्यैकाचो बशः स्थाने भषादेशः सकारादौ

प्रत्यये ध्वे च परे पदान्ते च विषय इत्यान्तरतम्यात् गकारस्य घकारे 'खरि च' इति घकारस्य तकारे जाघात्सि इति ॥

जागाधाञ्चकार । 'पूर्ववत्सनः' इति परस्मैपदम् । जागाधिता । जागाधिष्यति । जागाद्ध, जागाद्धात् । जागाद्धि । जागाधानि । अजाघात्, अजाघाद् । हल्ङ्यादिलोपे पदान्ते च इति बशो भषादेशे जश्त्वे च चर्त्वम् । सिपि तु 'दश्च' इति वा रुत्वे अजागाः इत्यपि ॥

जागाध्यात् । जागाध्याताम् । आशिषि— जागाध्यात् ॥ जागाध्यास्ताम् । अजागाधीत् । अजागाधिष्टाम् । अजागाधिष्यत्[1] । इत्यादि । सर्वत्र यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्य पक्षे ईडुदाहार्यः । लुङि तु 'अस्ति सिचः' इति नित्यः । भावादौ यङन्तवत् ॥

गाधयति । गाधयाञ्चकार । गाधयिता । गाधयिष्यति । गाधयतु । अगाधयत् । गाधयेत् । आशिष्यनिडाद्यार्धधातुकत्वाण्णिलोपे—गाध्यात् । अजगाधत् । अत्रास्य ऋदित्त्वात् 'नाग्लोपिशास्वृदिताम्' इति णौ चङि ह्रस्वे निषिद्धे अभ्यासस्यालघुपरत्वात्सन्वदित्त्वलघुदीर्घत्वे न भवतः । गाधयते इत्याद्युदाहार्यम् । प्रतिष्ठायां 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति चित्तवत्कर्तृकत्वे परस्मैपदमेव । भावकर्मणोर्यक्चिणोर्विषये णिलोपे गाधतिवद्रूपम् । स्यादिषु तु ण्यन्ते कर्तृवत् । चिण्वदिटि तु णिलोपे गाधिता इत्यादि प्रकृतिवदेव । कर्मकर्तरि यक्चिणोर्निषेधात्सर्वेषु लकारेषु कर्तृवत् ॥

---

1 ....धिषुः । 2 ....णिलोपे गाधतिवदेव ।

गाधनः—' अनुदात्तेतः ' इति युच् ॥

गाधा—' गुरोश्च हलः ' इत्यकारः । प्रतिष्ठायां स्पर्धिवत् । भावकर्त्रधिकरणेषु क्त उदाहार्यः । इतरयोस्तु ' तयोरेव ' इति नियमात्कर्मणि ॥

बाधृ लोडने ॥ ५ ॥

लोडनं प्रतिघातः । गाधिवत् ॥

बाहुः—' अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुग्धृग्दीर्घहकाराश्च ' इति कुप्रत्यये धातोर्हकारः ॥

भद्रबाहू—चतुष्पाद्विशेषः । ' बाह्वन्तात्संज्ञायाम् ' इति स्त्रियामूङ्प्रत्ययः ॥

सुबाहुर्नाम कश्चित्, तस्यापत्यं सौबाहविः—' बाह्वादिभ्यश्च ' इति षष्ठ्यन्तादपत्य इञ् । ' ओर्गुणः ' उवर्णान्तस्य भस्याङ्गस्य तद्धिते गुण इति गुणे अवादेशः । यद्यपि बाह्वादिषु केवलो बाहुशब्दः पठ्यते, ' समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधः ' इति तदन्तविधिश्च प्रतिषिध्यते ; तथापि केवलस्यापत्येनायोगात्तदन्तत्वलाभः अस्मदुपज्ञम् । संज्ञात्वेन विनियुक्तात् बाहोस्तु प्रत्ययो नेष्यते । यदाह—

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥

इति । ' राजश्वशुराद्यत् ' इत्यत्र भाष्यादौ चोक्तं ' संज्ञाश्वशुराद्यन्न ' इति ॥

उभाबाहु, उभयाबाहु प्रहरति । 'द्विदण्ड्यादिभ्यश्च' इतीच् समासान्तः । तस्य च द्विदण्ड्यादिष्वेवं पाठाल्लोपः । प्रत्ययलक्षणेन तदन्तत्वात् तिष्ठद्गुप्रभृतिषु इचः पाठात् तदन्तस्याऽव्ययीभावत्वविधानात् 'अव्ययीभावश्च' इत्यव्ययत्वे सुपो लुक् ॥

उभायाबाहु इत्यत्र 'उभादुदात्तो नित्यम्' इत्यत्रास्वरितत्वादेव वाग्रहणाननुवृत्तेः नित्यमयचि सिद्धे नित्यग्रहणं योगभेदेन वृत्तौ नित्यमयजन्तस्य प्रयोगार्थमित्युभशब्दस्योभया देशः । अयमर्थः सर्वादिसूत्रे कैय्यटादौ स्फोरितः । तथा च तत्र वार्तिकमपि 'उभयस्य सर्वनामत्वे अकजर्थः पाठः । अन्याभावो द्विवचनटा-विषयत्वात् उभयोन्यत्र' इति । उभाबाहु इत्यत्र तु द्विदण्ड्या-दिपाठात् उभयाभावः ॥

नाधृ नाथृ याच्ञोपतापैश्वर्याशीष्षु ॥ ६-७ ॥

उपतापो रोग इति वृत्तौ । उपघात इति तरङ्गिण्याम् । आद्यो धान्तः । द्वितीयस्थान्तः । अस्य थान्तस्य धान्तकाण्डे पाठोऽर्थसाम्यात् । उभावपि दन्त्यादी । सर्वं गाधतिवत् । द्विती-यस्य तु विशेषः— 'आशिषि नाथः' इत्याशिष्येवात्मनेपदम् । कर्मणि शेषत्वेन विवक्षिते षष्ठी च । सर्पिषो नाथते इत्यादि । 'षष्ठी शेषे' इत्येवात्र षष्ठी श्रूयत एव न लुप्यत इति । लोपश्च समासे । उक्तं च—

साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥

इति । न तर्हीदानीमिदं सम्भवति सर्पिर्नाथनं इति । भवति यदा कृद्योगलक्षणा षष्ठी । तथा च वार्तिकम्— 'प्रतिपदविधाना च षष्ठी

न समस्यते ' 'कृद्योगा च षष्ठी समस्यते ' इति । न चैवं सति समासनिषेधस्य वैयर्थ्यमिति वाच्यम् ; यतः शेषषष्ठ्याः 'समासस्य ' इत्यन्तोदात्तत्वेन भाव्यम् । अन्यस्यास्तु 'गतिकारकोपपदात्कृत् ' गत्यादिभ्यः परं कृदन्तमुत्तरपदं प्रकृतिस्वरमित्युत्तरपदप्रकृतिस्वरेण भाव्यम्. स च लिति प्रत्यये पूर्वमुदात्तं इत्युदात्तत्वम् ॥

अनाशिषि परस्मैपदं द्रष्टव्यम् । नाथति । ननाथ । नाथिता । नाथिष्यति । नाथतु । अनाथत् । नाथेत् । नाथ्यात् । अनाथीत् । अनाथिष्यत् ॥

निनाथिषति । इत्याद्यपि ॥

यङ्लुक्यझषन्तत्वात् 'झषस्तथोर्धोऽधः ' इति धत्वाभावे 'खरि च ' इति चर्त्वे—नानात्ति । नानात्तः । नानात्थ । इत्यादिविशेषः ॥

अत्र मैत्रेयाभरणकारावाद्यं णोपदेशं पठन्तौ 'णो नः ' इति धात्वादित्वाण्णकारस्य नकारं विधाय 'उपसर्गादसमासेऽपि णोपदेशस्य ' इति उपसर्गस्थान्निमित्तात्परस्य णोपदेशनकारस्य समासासमासयोर्णत्वविधानात् प्रणाधते इत्यादौ णत्वं प्रयोजनमाहतुः । सर्वे नादयो णोपदेशा इत्यस्य पर्युदासे 'नृतिनन्दिनदिनक्किनाटिनाधृनाथृनृवर्जम् ' इत्यत्र चैनं न पेठतुः । अत्र काश्यपः— 'नाधतेर्णोपदेशत्वमयुक्तम् , गणकारवृत्तिकारादीनामनिष्टत्वात् ' इति । नृतीनन्दीत्यादिवाक्ये नृ[1]वर्जं नृत्यादीन् पठित्वैतान्सप्त वर्जयित्वा इति वदन् श्रीकरोप्यत्रैवानुकूलः । तथा पर्युदासवाक्ये नर्दतिवर्जं सर्वानेतान्पठतः शाकटायनन्यासकृतोऽप्य[2]यमेव पक्षोऽभिमतः । उभयोस्थान्तपाठस्तु धान्तप्रकरणविरोधान्नाशङ्क्यः ॥

---

[1] नाथु· इति मु·   [2] कृतोरप्य ।

इमौ याच्ञायामकथितेप्सिततमाभ्यां द्विकर्मकौ—

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥

इत्यत्र भिक्षेरर्थपरत्वात् । उक्तं च कैयटे—दुह्यादीनां चार्थोपलक्षणायोपादानात् पर्यायप्रयोगेऽपि कर्मसंज्ञा भवतीति । अर्थाश्रया चेयं संज्ञा न दुह्यादिवत्स्वरूपाश्रयेति भिक्षिं प्रस्तुत्य वदतो हरदत्तस्यापि मतेऽत्र न विवादः । श्लोकार्थस्तु—उपयुज्यत इति उपयोगः पयःप्रभृति प्रधानं कर्म तस्य निमित्तं गवादि तच्च, यच्च ब्रुविशास्योर्गुणेन प्रधानकर्मणा धर्मादिना क्रियां प्रति साधनत्वेन गुणत्वात् लब्धगुणव्यपदेशेन सचते सम्बन्धमुपैति माणवकादि तदुभयं कारकं अपूर्वविधौ विशेषेणाविवक्षितत्वादपादानादिसंज्ञाभावे कविना क्रान्तदर्शिना सूत्रकारेणाकथितं कर्मोक्तमिति । याचिरिहानुनयार्थः । याचनार्थस्य तु भिक्षिणैव सिद्धम् ॥

अथान्येऽपि द्विकर्मकाः प्रसङ्गात्प्रदर्श्यन्ते । यदाह—

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं कर्तव्यमिति निश्चयः ॥

गत्यर्थग्रहणं गत्यादिसूत्रोपात्तानामुपलक्षणम् ॥

जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेः ।
तारेर्ग्राहेस्तथा मोचेस्त्याजेर्दापेश्च[1]सङ्ग्रहः ॥
कारिकायां चशब्देन सुधाकरमुखैः कृतः ।
ग्राहेरिह ग्रहो नैव हरदत्तस्य सम्मतः ॥

यदसौ 'गतिबुद्धि' इत्यत्र " अथ कथं—

---

[1] मु—दीपेश्च ।

अयाचितारं न हि देवदेवमद्रिस्सुतां ग्राहयितुं शशाक ।

इति । स्वतन्त्राः कवयः । यद्वा—सुतां प्रति न किंचिदुद्वाहविषयं ग्राहयितुं बोधयितुं शशाकेत्येवं व्याख्येयम् । तत्र बुद्ध्यर्थत्वात् द्विकर्मकत्वं सिद्धम्" इति साधयति, इयं च निर्वाहणदिक्, प्रतिग्रहणस्य ममेदमिति । बुद्धिविशेषरूपत्वात् सुतां प्रतिग्राहयितुं ममेयमिति बोधयितुं न शशाक इत्येवं व्याख्यातुमुचितत्वात् । इदानीं न किंचिदुद्वाहविषयमिति नाध्याहर्तव्यं भवति । तथा श्रीकराचार्यस्याप्यनभिमतमुपादानार्थस्य द्विकर्मकत्वम् ।

अजिग्रहत्तं जनको धनुस्तद्येनार्दिदद्दैत्यपुरः पिनाकी ।
जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥

इति भट्टिश्लोकं विवृण्वन्यदाह—"तद्धनुस्तं रामं जनकोऽजिग्रहत् बोधितवान् अनेन धनुषा त्रिपुरं दग्धमिति । ग्रहेश्च बुद्ध्यर्थत्वात् 'गतिबुद्धि' इत्यादिना रामस्य कर्मसंज्ञा, धनुषस्तु 'कर्तुरीप्सिततमम्' इति, ग्रहिः द्विकर्मकः । उपादानार्थत्वे तु ग्रहिर्गत्यादिष्वेकोऽपि न भवतीति कथं तमिति" इति । अत एव

तमादौ कुलविद्यानामर्थमर्थविदां वरः ।
पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पिता ॥

इत्यत्र अर्थमग्राहयदित्यत्र बुद्ध्यर्थत्वात् द्विकर्मकत्वमुक्त्वा पाणिमग्राहयदित्यत्र तेनेत्यध्याहारेण व्याख्यानात् प्रकृत्योश्श्लेषेण[1] बुद्ध्युपादानयोर्ग्रहणम् । किञ्चास्य द्विकमकत्वे

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।

---

[1] मु—प्रकृत्युपश्लेषेण ।

इत्यत्र 'ण्यन्ते कर्तुश्च कर्मणः' इति प्रयोज्याया धेनोरभिधानेन भाव्यं; ततश्च जायया गन्धमाल्ये या धेनुः प्रतिग्राहितेति विगृहीतव्यम्। अत्र च प्रथमार्थं वर्जयित्वा सर्वविभक्त्यर्थेषु बहुव्रीहिरित्युक्तत्वात्समासो न स्यात्; सत्यपि समासे समानाधिकरणोत्तरपदाभावात्, 'स्त्रियाः पुंवत्' इति पुंवद्भावो न स्यात्। पक्षान्तरे तु गन्धमाल्ययोरेव कर्मत्वात्तयोरेव क्तेनाभिधानात् जायया प्रतिग्राहिते गन्धमाल्ये यया धेन्वेत्यूढरथादिवत् तृतीयार्थे समासस्सिद्ध्यतीति गतमदः। इशिशकी च द्विकर्मकावेव भाष्य उक्तौ। एवं च 'अयाचितारं न हि देवदेवं' इत्यत्रापि देवः शक्त्यपेक्षया कर्म, सुता प्रतिग्रहापेक्षया इति न संकटं किंचित्। अथ द्विकर्मकसाधारणमिदं विचार्यते—किमेभ्यो लादयः प्रधाने कर्मणि भवन्ति, अथाप्रधाने? न च अनयोर्युगपदभिधानसम्भवः, भिन्नकक्षत्वात्। अत्राह

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः॥

इति। अभिधान इति शेषः। अत्र द्विकर्मणामित्यनेन 'नीवह्योर्हरतेश्चापि' इति चशब्दसमुच्चिताः कृषिः नयत्यादयश्च त्रय उच्यन्ते, अन्येषां विशेषस्य वक्ष्यमाणत्वात्। तथा दुह्यादीना—मित्यनेन कारिकोपात्ताश्चशब्दसमुच्चितेष्वहेतुमण्ण्यन्ताः जिदण्ड्यादयश्चोच्यन्ते। ण्यन्त इत्यनेन तु गत्यादिसूत्रोपात्ताश्चशब्दसमुच्चितास्तार्यादयश्च। अत्र बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु प्राकृते वा कर्मणि प्रयोज्ये वा लादयः। यदाह—

कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिस्सपरे।
ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरत॥

अस्यार्थ :—तत्र प्रथम:पाद: प्रधानकर्मणि लादिभिरभिहिते गुण-कर्मणि षष्ठीत्येकीयमतदूषणपर इति इहानुपयोगात् न व्याख्या—यते । सपरे गत्यादिसूत्रोपात्तसहिते दुह्यादौ गुणकर्मणि लादय:। गुणकर्मेति पुरुषप्रवृत्तेः पय:प्रभृत्यर्थत्वात् दुह्यादावप्रधानं गवाद्युच्यते । ण्यन्ते तु शब्दत: प्रयोजकव्यापारस्य प्राधान्यं प्रयोज्यव्यापारस्य त्वप्रधान्यमिति तदाप्यं धर्माद्युच्यते । बुद्धयु-क्तयोऽकर्मका: चेष्टितयुक्तयो गत्यर्था:, एष्वगुणेऽप्रयोज्ये, तदेत-दनल्पमतेर्मेधाविन आचार्यस्य वचनमिति । अत्र स्मरतेत्यने-नागमस्याविच्छेदं दर्शयति । एवं चात्रापि याचनस्य धनाद्यर्थ-त्वात्तस्यैव प्राधान्यादन्यद्राजादिकमप्रधानमिति तत्रैव लादयो भ-वन्तीति—नाथ्यते राजा धनं. नाथ्य: नाथित: सुनाथ: इत्या-दि भवति। नाथिता धनस्य राज्ञ इत्यत्र द्वितीयावत् कर्मणि षष्ठ्युभयत्र भवति । गुणकर्मण्युभयथा गोणिकापुत्र इति भाष्ये उक्तत्वात् द्वितीयाऽपि द्रष्टव्या—नाथिता धनस्य राजानं इति । भाष्ये नयतेरुदाहरणं प्रदर्शनमात्रम् । स्पष्टं चैतत् पदमञ्जर्यादिषु ॥

नाथितव्यो राजा धनं देवदत्तेनेत्यत्र कर्तृकर्मणो: प्राप्ता कृ-द्योगलक्षणा षष्ठी 'कृत्यानां कर्तरि वा' इत्यत्र 'कृत्यानाम्' इति योगं विभज्य उभयप्राप्तौ नेति चानुवर्त्य उभयप्राप्तौ कृत्ये षष्ठ्यभावस्य भाष्ये प्रतिपादितत्वान्न भवति । स्पष्टं चैतत्तत्र कैयटादौ ॥

यत्तु कृत्यानामित्यत्र 'उभयप्राप्तौ कृत्ये षष्ठ्या: प्रतिषेध:' इति वृत्तिमुपादाय 'प्रतिषेधोऽयं कर्तरि षष्ठ्या:'; कर्मणि षष्ठ्यास्तु प्रधानस्य कर्मण: कृत्येनाभिधानादन्यस्याप्राधान्यादप्रसङ्ग:' इति न्यासे अर्थसतत्त्वमुक्तं, तद्द्वितीयावदप्रधाने षष्ठ्यनिवार्येति यत्किंचित् । 'कर्तरि वा' इति विधीयमानषष्ठीविकल्प उभय

प्राप्तिव्यतिरिक्तकृत्यविषयः— नाथितव्यं सर्पिः देवदत्तेन देवदत्तस्य इति वा ॥

दध धारणे ॥ ८ ॥

दाने इति केचित्पठन्ति, 'दद दाने' इत्यत्र धारणे इति, तदयुक्तम् ।

तद्वेषोऽसदृशोऽन्याभिस्स्त्रीभिर्मधुरताभृतः ।
दधते सुलभां शोभां तदीया विभ्रमा इव ॥
व्रजविटपममुं ददस्व तस्यै
पिबति च पाति च याऽसकौ रहस्त्वाम्
दाददो[1]दुद्ददुद्दादी दादादीदूददीददीः[2] ।
दुद्दादं दददे दुद्दे ददाददददोऽददः

इत्यादौ दधो धारणार्थत्वस्यान्यस्य दानार्थत्वस्य च व्यवस्थितत्वात् ॥

दधते । दधेते । दधन्ते । दधसे । दधे । दधावहे । दधामहे ॥ दधमानः ॥

देधे । देधाते । देधिरे । देधिषे । देधे । देधिवहे । 'अत एकहल्मध्येऽनादेशादेर्लिटि' किति लिटि परत्रावस्थिते यस्यादेशादेशो नास्ति तस्यासहाययोर्हलोर्मध्यगतस्याकारस्यैकार अभ्यासस्य च लोप इत्येत्वाभ्यासलोपौ । लोपोऽयं शिदिति सर्वादेशः । नन्वभ्यासादेर्दकारस्य जश्त्वेन प्रकृतिजशां प्रकृतिजश इति दत्वे कथमनादेशादित्वम् । न च पूर्वत्रासिद्धत्वम्, 'तॄफलभजत्रपश्च' इति फलभजिग्रहणात् । असिद्धत्वे ह्यनादेशादित्वे-

[1] दोददो । [2] दादादो दुद्ददोददोः ।

नैवैत्वाभ्यासलोपयोः सिद्धत्वान्न तत्कुर्यात् । एवं तर्हि 'न शसददवादिगुणानाम्' इति शसिदद्योः एत्वाभ्यासलोपनिषेधाद्रूपाभेदे आदेशादित्वं नाश्रयिष्यते । तथा च वार्तिकं—प्रथमतृतीयादीनामादेशादित्वादेत्वाभाव इति चेत् शसिददिप्रतिषेधो ज्ञापको रूपभेदे एत्वविज्ञानस्येति ।

दधिता । दधितासे । दधिताहे ॥ दधिष्यते । दधिष्यमाणः ॥

दधताम् । दधस्व । दधै ॥ अदधत । अदधेताम् । अदधन्त । अदधथाः । अदधे । अदधावहि ॥

दधेत । दधेयाताम् । दधेथाः । दधेय ॥ आशिषि—दधिषीष्ट ॥

अदधिष्ट । अदधिषाताम् । अदधिष्ठाः । अदधिषि ॥ अदधिष्यत । इत्यादि ॥

कर्मकर्त्रोर्यक्चिण्विषये—दध्यते । दध्यताम् । अदध्यत । दध्येत । अदाधि । इत्यादि । अन्यत्र कर्तृवत् ॥

दिदधिषते । दिदधिषाञ्चक्रे । दिदधिषिता । दिदधिषिष्यते । दिदधिषताम् । अदिदधिषत । दिदधिषेत । आशिषि— दिदधिषीष्ट । अदिदधिषिष्ट । अदिदधिषिष्यत । इत्यादि ॥

कर्मणि यक्चिण्विषये दिदधिष्यत इत्यादि । अन्यत्र कर्तृवत् । कर्मकर्तरि तु यक्चिणोर्निषेधात्सर्वत्र कर्तृवत् । अतो लोप आर्धधातुके ॥

दादध्यते । दादधाञ्चक्रे । दादधिता । दादधिष्यते । दादध्यताम् । अदादध्यत । दादध्येत । आशिषि—दादधिषीष्ट । आदादधिष्ट । अदादधिष्यत । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः ।

सर्वत्रार्धधातुके 'यस्य हलः' 'अतो लोपः' इति यलोपाल्लोपौ ॥ कर्मकर्त्रोर्यङन्तेऽपि विशेषो नेति गाधतावेवोपपादितम् ॥

दादद्धि । दादद्धः । दादत्सि । दादध्मि । 'दधस्तथोश्च' इत्यत्र कृतद्विर्वचनस्य दधातेर्ग्रहणात् । तकारथकारादौ चकारात्सकारादौ ध्वे पदान्ते च बशो विधीयमानो भष्भावोऽस्य न भवतीति 'एकाचः' इति सादौ ध्वे पदान्ते च विधीयमानः सामान्य एव भवति ।

दादधाञ्चकार । दादधिता । दादधिष्यति । दादद्धु, दादद्धात् । दादद्धि । दादधानि । अदाधद् । अदाधत् । अदादद्धाम् । अदादधुः । अदाधः, अदाधत् अदाधद् । अदादद्ध । अदादधम् । अदादध्व । 'अत्र हल्ङ्याभ्यः' इति तिप्सिपोर्लोपे पदान्तत्वात् 'एकाचः' इति भष्भावे जश्त्वे वा चर्त्वम् । सिपि तु 'दश्च' इति वा रुत्वं च । झशादौ 'झलां जश्झशि' इति धकारस्य दकारः ॥

दादध्यात् । दादध्याताम् । अशिपि—दादध्यात् । दादध्यास्ताम् । इत्यादि ॥

अदादधीत्, अदादाधीत् । 'अतो हलादेर्लघोः' इति हलादेर्हलन्तस्य लघोरतस्स्थाने वा वृद्धिरिडादौ परस्मैपदपरे सिचि । एवं अदादाधिष्टाम्, अदादधिष्टाम् इत्यादि । अदादधिष्यत् इत्यादि । सर्वत्र यङ्लुकः परस्य हलादेः पितः सार्वधातुकस्य पक्षे ईडुदाहार्यः । कर्मणि यङन्तवदिति बाधतावेवोपपादितम् ॥

दाधयति इत्यादि । बाधयतिवत् । चङि तु 'णौ चङि' इति ह्रस्वत्वे सन्वत्त्वदीर्घत्वे विशेषः । अदीदधत् इत्यादि ॥

दधनः—'अनुदात्तेतः' इति युच् ॥

स्कुदि आप्रवणे ॥ ९ ॥

आप्रवणमुत्प्लवनं उत्प्लुत्य गमनं वेति तरङ्गिण्याम् । उद्धरणमिति भोजः । अत्र सकर्मकः । 'इदितो नुम्धातोः' इत्यन्तेदित्वान्नुमागमः उपदेशिवद्वचनादुपदेशावस्थायाम् । स्कुन्दते । स्कुन्दसे । स्कुन्दे ॥ चुस्कुन्दे । चुस्कुन्दिषे । चुस्कुन्दिवहे । 'शर्पूर्वाः' इति खयश्शेषः । 'कुहोश्चुः' अभ्यासकवर्गहकारयोश्चवर्ग इत्यान्तर्यात् ककारस्य चकारः ॥

स्कुन्दिता । स्कुन्दिष्यते । स्कुन्दताम् । अस्कुन्दत । स्कुन्देत । आशिषि—स्कुन्दिषीष्ट । अस्कुन्दिष्ट । अस्कुन्दिष्यत ॥

भावादिषु यक्चिणोः—स्कुन्द्यते । स्कुन्द्यताम् । अस्कुन्द्यत । स्कुन्द्येत । अस्कुन्दि । इत्यादि ॥

चुस्कुन्दिषते । चुस्कुन्दिषांचक्रे । चुस्कुन्दिषिता । चुस्कुन्दिषिष्यते । चुस्कुन्दिषताम् । अचुस्कुन्दिषत । चुस्कुन्दिषेत । आशिषि—चुस्कुन्दिषिषीष्ट । अचुस्कुन्दिषिष्ट । अचुस्कुन्दिषिष्यत ।

चोस्कुन्द्यते । चोस्कुन्दाञ्चक्रे । चोस्कुन्दिता । चोस्कुन्दिष्यते । चोस्कुन्द्यताम् । अचोस्कुन्द्यत । चोस्कुन्द्येत । चोस्कुन्दिषीष्ट । अचोस्कुन्दिष्ट । अचोस्कुन्दिष्यत । भावादौ न विशेष इति गाधतौ प्रतिपादितम् ॥

चोस्कुन्दीति चोस्कुन्ति । चोस्कुन्दाञ्चकार । इत्यादि । लङि तिप्सिपोर्हल्ङ्यादिसंयोगान्तलोपयोः—अचोस्कुन् । भावादौ यङन्तवदित्युक्तम् ॥

स्कुन्दयति । स्कुन्दयते । इत्यादि ॥

स्कुन्दनः—युच् ॥

स्कुन्दा—उपदेशावस्थायां नुमो विधानात् धातोः गुरुमत्त्वात् 'गुरोश्च हलः' इति स्त्रियामकारो लघूपधगुणाभावश्च ॥

श्विदि श्वैत्ये ॥ १० ॥

अकर्मकः। श्वेतस्य गुणस्यापि धातुना साध्यतया क्रमिकतया चाभिधानात् क्रियात्वम्। यदाह—

श्वितते श्वेत इत्येतत् श्वेतत्वेन प्रकाश्यते।
आश्रितक्रमरूपत्वादभिधानं प्रवर्तते ॥

इति पूर्ववन्नुमागमः। श्विन्दते। श्विन्दसे। शिश्विन्दे। इत्यादि स्कुन्दिवत् ॥

वदि अभिवादनस्तुत्योः ॥ ११ ॥

प्रणतिपूर्वमाशिषो वाचनमभिवादनम्। तथा च प्रयोगाः— "अभिवदति नाभिवादयतेऽप्याचार्यं श्वशुरं राजानम्" इति। वन्दते। ववन्दे। वन्दिता। इत्यादि। पूर्ववन्नुमि कृते अकारस्यासहायहल्मध्यगतत्वाभावान्नैत्वाभ्यासलोपौ; 'न शसददवादिगुणानाम्' इति निषेधाद्वा। गुण इति तद्भावितोऽकार उच्यते ॥

वन्दारुः—'शृवन्द्योरारुः' इति तच्छीलादिषु कर्तृष्वारुप्रत्ययः ॥

वन्दना—'घट्टिवन्दिविदिभ्यश्च' इति स्त्रियां युच् ॥

वन्दा—वृक्षरुहा। बाहुलकात् स्त्रियां संज्ञायामकारः।

वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि।

इत्यमरः ॥

**वन्दी** इति स्तोतर्यावश्यकणिन्यन्तः । हठहृतमहिलायां तु 'इत्' इति सर्वधातुविषयेन्नन्तात् 'सर्वतोक्तिन्नर्थादित्येके' इति ङीषि । अयं बशादिरपभ्रंशः । यदाह राजानकः सन्दिग्ध-स्योदाहरणे—

आलिङ्गितस्तत्र भवान्सम्पराये जयश्रिया ।
आशीःपरंपरां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥

अत्र वन्द्यां इति किं हठहृतमहिलायां उत नमस्यामिति सन्देह इति ॥

**वन्द्रः** पूजकः । 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपि-वन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिभिदिछिदिभिदिमन्दिचन्दिदभिदसिदम्भिव-हिवसिवाशिशीङ्हसिसिधिशुंभिभ्यो रक्' इति रक्प्रत्ययः ॥

**भदि कल्याणे सुखे च ॥ १२ ॥**

अत्र कल्याणं मङ्गलं, सुखमात्मगुणः । भन्दते । बभन्दे । भन्दिता । इत्यादि स्कुन्दिवत् ॥

**देवदत्ताय भद्रं भूयात्, देवदत्तस्येति वा ।** 'ऋज्रेन्द्राग्रवज्र-विप्रकुब्रचुब्रक्षुरखुरभद्रोग्र[1] भेरभेलशुक्रगौरवन्रेरमाला' इति रक्यनुनासिकलोपे च भद्रशब्दो निपातितः । तद्युक्तात् 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशल-सुखार्थहितैः' इत्याशिषि गम्यमानायां चतुर्थीषष्ठ्यौ । अत्रायुष्यादयोऽर्थ-पराः ॥

**भद्राकरोति** मुण्डयतीत्यर्थः । 'भद्राच्चेति वक्तव्यम्' इति परिवापणे मुण्डने कृञो योगे डाच्प्रत्ययः । अस्य च 'ऊर्यादिच्विडाचश्च' इति गतित्वात्पूर्वं प्रयोगः । अत एव निपातत्वेनाव्ययत्वात्सोर्लुक् ॥

---

[1] मु—द्रोग्रमन्द्र ।

मदि स्तुतिमोदमदस्वप्नगतिषु ॥ १३ ॥

कान्तिगतिष्वित्येके । मोदो हर्षः । मदो गर्वः । स्वप्न आलस्यम् । चन्द्रस्तु—"मदि जाड्ये" इत्येव पपाठ । स्तुति-गतिभ्यामन्यत्राकर्मकः ॥

मन्दते । ममन्दे । मन्दिता । इत्यादि पूर्ववत् ॥

मन्दुरा—'मन्दिवाशिमथिचतिशङ्क्यङ्किभ्यः उरच्' इत्युरच् ।

मन्दिरम्—'इषिमदिमुदिखिदिछिदिभिदिमन्दिचन्दितिमिमिहिमुहि-मुचिरुचिरुधिशुषिवन्दिभ्यः किरच्' इति किरच् ॥

मन्द्रम्—'स्फायितञ्चि' इत्यादिना रक् ॥

मन्दारः—'अगिमदिमन्दिभ्यः आरन्' इत्यारन् ॥

मन्दरः—बाहुलकादरः । यद्वा—मन्दं मोदं रातीति मन्दरः ।

अयमनिदित् [मिदित्] हर्षे ईदित् दिवादौ । हर्षग्लेपनयोः घटादौ । मद तृप्तियोगे इति चुरादौ ॥

स्पदि किञ्चिच्चलने ॥ १४ ॥

चलनं कम्पनम् । अकर्मकः । स्पन्दते । पस्पन्दे । स्पन्दिता । इत्यादि पूर्ववत् ॥

स्पन्दयति । 'निगरणचलनार्थेभ्यश्च' इति ण्यन्तात्परस्मैपदमेव । निगरणमभ्यवहारः ॥

क्लिदि परिदेवने ॥ १५ ॥

परिदेवनं शोचनम् । सकर्मकः । क्लिन्दते देवदत्तम् । चिक्लिन्दे । क्लिन्दिता । इत्यादि ॥

क्लेदा. क्लेदानौ 'क्लेदौषधिशशाङ्कयोः' इति यादवप्रकाशः । 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघ – वन्' इति कनिनि गुणनुमभावयोर्निपातितः । 'सर्वनामस्थाने चासंबुद्धौ' इति नान्तत्वादुपधाया दीर्घः । संबुद्धौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन सुबन्तत्वात्पदत्वे 'नलोपः प्रातिपदिकान्तस्य' इति प्राप्तो नलोपो 'न ङिसंबुद्ध्योः' इति निषिध्यते । भसंज्ञायामल्लोपे—क्लेद्नः इत्यादि । सप्तम्येकवचने तु 'विभाषा ङिश्योः' इत्यल्लोपस्य विकल्पनात्—क्लेद्नि क्लेदिनि इत्यपि भवति । हलादौ पदत्वान्नलोपे—क्लेदभ्यां इत्यादि । नलोपस्य पूर्वत्रासिद्धत्वात् 'सुपि च' 'अतो भिस ऐस्' 'बहुवचने झल्येत्' इत्यादिविधयो न भवन्ति ।

स्कुन्द्यादय एनदन्ताः सप्त इदितः । अयं परस्मैपदिष्वपि पठिष्यते । ऊदिदार्द्रीभावे दिवादौ ॥

मुद हर्षे ॥ १६ ॥

मोदते । मोदेते । मोदसे । मोदे । लघूपधत्वाद्गुणः ॥

मुमुदे । मुमुदाते । मुमुदिषे । मुमुदिवहे । 'असंयोगाल्लिट्कित्' इति कित्त्वान्न गुणः ॥

मोदिता ॥ मोदिष्यते । मोदताम् । अमोदत । मोदेत । आशिषि—मोदिषीष्ट । अमोदिष्ट । अमोदिष्यत । इत्यादि ॥

भावे—मुद्यते । मुद्यताम् । अमुद्यत । मुद्येत । अमोदि । शेषं कर्तृवत् ॥

मुमुदिषते, मुमोदिषते । 'रलो व्युपधाद्धलादेस्संश्च' रलन्ताद्धलादेरुकारोपधात् परौ सेटौ क्त्वासनौ वा कितौ भवत इति कित्त्वपक्षे न गुणः ॥ मुमुदिषाञ्चक्रे, मुमोदिषाञ्चक्रे । इत्युदाहार्यम् ॥

मोमुद्यते । मोमुदाञ्चक्रे मोमुदिता । इत्यादि । अत्रार्धधातुके यलोपाल्लोपयोः लघूपधगुणो न भवति, 'न धातुलोप आर्धधातुके' इति धात्वेकदेशलोपनिमित्तार्धधातुकनिमित्तयोर्गुणवृद्ध्योर्निषेधात्, 'अचः परस्मिन्पूर्वविधौ' इत्यल्लोपस्य स्थानिवत्त्वाद्वा ॥

मोमोत्ति, मोमुदीति । मोमुत्तः । मोमुदति । मोमुत्सि, मोमुदीषि । मोमोद्मि, मोमुदीमि । मोमुद्वः । यङ्लुकोऽनैमित्तिकत्वात् 'न धातुलोप' इति निषेधो न भवति । ईटि तु 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषेधः ॥

मोमोदाञ्चकार । मोमोदिता । मोमोदिष्यति । मोमोत्तु, मोमुत्तात्, मोमुदीतु । मोमुद्धि । हेरपित्त्वान्न गुणः । मोमुदानि । मोमुदाव । आट्यजादिपित्सार्वधातुकत्वात् 'नाभ्यस्तस्य' इति गुणनिषेधः । लङीडभावपक्षे तिप्सिपोर्हल्ङ्यादिलोपे 'वाऽवसाने' इति पक्षे चर्त्वम् । सिपि तु 'दश्च' इति वा रुत्वमपि । अमोमोत्; अमोमोद् । अमोमुत्ताम् । अमोमोः । अमोमुदम् । ईटि अमोमुदीत् । अमोमुदीः ॥

**मोमुद्यात्** । आशिषि— **मोमुद्यास्ताम्** । यासुटो ङित्त्व-किस्त्वभ्यां न गुणः । **अमोमोदीत्**—सिज्लोपस्यासिद्धत्वाद्वा प्रत्ययलक्षणेन वा गुणः । **अमोमोदिष्टाम्** । हलन्तलक्षणा वृद्धिः 'नेटि' इति निषिध्यते । **अमोमोदिष्यत्** इत्यादि ॥

**मोदयति** । **मोदयाञ्चकार** । इत्यादि पूर्ववत् ॥

लुङि **अमूमुदत्** । 'दीर्घो लघोः' इति दीर्घः ॥

**मुदित्वा, मोदित्वा** । उक्तः क्त्विविकल्पः ॥

**मुदितमनेन, मोदितमनेन** 'निष्ठा' इति भूते यः क्तः सः 'तयोरेव कृत्यक्त' इति नियमादकर्मकादस्मात् भावे । **प्रमुदितमनेन, प्रमोदितमनेन** । **प्रमुदितः, प्रमोदितः** । अस्यादिक्रियालक्षणस्यात्र भूतत्वाश्रयेण 'निष्ठा' इति क्तः । स च 'आदिकर्मणि क्तः कर्तरि च' इति भावकर्त्रोर्द्वयोरपि भवति ॥

**प्रमुदितवान्, प्रमोदितवान्** । 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इति सेटो निष्ठायाः पक्षे क्त्विनिषेधाद्गुणः । भावादिकर्मभ्यामन्यत्र—**मुदितो देवदत्तः, मुदितवान्** इत्येव ध्रौव्यार्थत्वात्कर्तरि क्तः । **मुदितवान्** इत्यत्र 'अत्वसन्तस्य चाधातोः' इत्यत्वन्तस्याधातोरसन्तस्य चोपधायाः सम्बुद्धिवर्जिते सौ विहिताद्दीर्घादनन्तरं क्तवतोरुदित्त्वेन नुमि हल्ङ्यादिसंयोगान्तलोपौ । पूर्वं तु नुमि न दीर्घस्य प्रसङ्गः, उपधाऽभावात् । न च संयोगान्तलोपादनन्तरमुपधात्वे भूतपूर्वगत्या अत्वन्ताश्रयस्य दीर्घस्य प्रसङ्गः, नापि नान्तत्वेन 'सर्वनामस्थाने' इति दीर्घस्य, यतस्तयोस्संयोगान्तलोपोऽसिद्धः ॥

**मोदनः**—युच् ॥

मुत्—'सम्पदादिभ्यः क्विप्च' इति स्त्रियां क्विप् ॥

मुदिरः मेघः—'इषिमदि' इत्यादिना किरच् ॥

मुद्गः—'मुदिग्रोर्गग्गौ' इति गक् । किस्वान्न गुणः ॥

मुद्गेन संसृष्टं मौद्गम्—'मुद्गादण्' इति तृतीयान्तादस्मात्संसृष्टेऽण्प्रत्ययः ॥

मुद्रा—'स्फायितञ्चि' इत्यादिना रक् ॥

संसर्गार्थोऽयं चुरादौ ॥

दद दाने ॥ १७ ॥

किंचिदुद्दिश्य अपुनर्ग्रहणाय स्वीयत्यागो दानम् ।

ददते । ददसे । ददे ॥ ददृदे । ददृदाते । ददृदिषे । ददृदे । 'न शसदद' इत्येत्वाभ्यासलोपनिषेधः ॥

ददिता ॥ ददिष्यते ॥ ददताम् । अददत । ददेत । आशिषि—ददिषीष्ट । अददिष्ट । अददिष्यत ॥

कर्मादौ—दद्यते । दद्यताम् । अदद्यत । दद्येत । अदादि । शेषं कर्तृवत् ॥

दिददिषते ॥ दादद्यते ॥ दाददीति, दादत्ति ॥ दादयति । दादयते । शेषं मुदिवन्नेयम् ॥

ष्वद स्वर्द आस्वादने ॥ १८–१९ ॥

संवरण इति क्षीरस्वामी । आस्वादनमनुभवः । अत्रायं सकर्मकः ।

स्वदन्ति देवा उभयानि हव्या ।*

इति दर्शनात् । छान्दसं परस्मैपदम् । तथा स्वादन इति ण्यन्तेनार्थनिर्देशाच्च सकर्मकोऽयम्, यद्वक्ष्यति चुरादौ—'आस्वदस्सकर्मकात्' इति । अस्यार्थस्तत्र प्रपञ्चयिष्यते । यदाऽयमनेकार्था धातव इति रुचौ वर्तते तदा अकर्मकः । आद्यः षोपदेशः । तदुक्तं भाष्ये—'अज्दन्त्यपराः सादयः षोपदेशाः स्मिङ्स्विदिस्वदिस्वञ्जिस्वपश्च' इति । प्रायेणायमाङ्पूर्वः । स्वदते रसम् । सस्वदे । स्वदिता इत्यादि ददिवत् ।

रुच्यर्थत्वे खल्वपि दधि स्वदते देवदत्ताय—'रुच्यर्थानां प्रीयमाणः' इति तर्प्यमाणस्यैषां प्रयोगे संप्रदानत्वाद्देवदत्ताच्चतुर्थी । अन्यकर्तृकोऽभिलाषो रुचिरिति वृत्तिः । अत्र हरदत्तः—योऽभिलाषस्याश्रयः प्रीयमाणः ततोऽन्यकर्तृक इत्यर्थः । कथं पुनरन्याश्रयस्याभिलाषस्यान्यः कर्ता भवति, यावता यदाश्रयव्यापारं धातुः प्राधान्येनाचष्टे स कर्ता । नेदं कर्तृलक्षणं ; किं तर्हि? स्वातन्त्र्यमेव । तच्च क्वचिद्वास्तवं क्वचिद्वैवक्षिकम् । तत्र माधुर्यातिशयेन स्वविषयं देवदत्ताश्रयमभिलाषं जनयद्दधि तत्र कर्तृ इति गीयते इति ॥ अत्र 'सात्पदाद्योः' इति सातिप्रत्ययपदाद्योस्सकारस्य षत्वनिषेधादिणः परत्वेऽपि न षत्वम् ॥

कर्मादौ स्वद्यते इत्यादि ॥

सिस्वदिषते—'स्तौतिण्योरेव षण्यभ्यासात्' इति नियमान्न षत्वम् । अभ्यासस्थान्निमित्तादुत्तरस्य 'आदेशप्रत्यययोः' इति षत्वं कृतषत्वे सनि यदि भवति स्तौतिण्यन्तानामेवेति सूत्रार्थः ॥

---

* ऋक्सं—७-२-२ ।

साखद्यते । साखर्दीति, साखत्ति ॥

स्वादयति । स्वादयते । असिस्वदत् । शेषं पूर्ववत् ॥

ण्यन्तात्सनि 'स्तौतिण्योरेव' इति नियमात् षत्वे प्राप्ते तदपवादः 'सस्विदिस्वदिसहीनां च' इति सकारो विधीयत इति सिस्वादयिषति इति भवति । ये त्वमुं दन्त्यादिं पठन्ति तेषामिदं सत्ववचनं कथमर्थवदिति त एव प्रष्टव्याः ॥

स्वर्दते । सस्वर्दे इत्यादि स्वदिवत् । 'अज्दन्त्य' इति षोपदेशलक्षणं केवलदन्त्यविषयमिति दन्त्योष्ठ्यपरोऽयं न षोपदेशः । अत एव दन्त्योष्ठ्यपराः खिद्यादयः 'स्मिङ्स्विदिस्वदि' इत्यादिना पुनः पठ्यन्ते ॥

स्वादुः—'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' इत्युण्प्रत्ययः । स्वाद आस्वादने इत्यत्रैवाग्रे ॥

उर्द माने क्रीडायां च ॥ २० ॥

क्रीडायामकर्मकः । चकारादास्वादने च । इह मानं सुखमिति* संमतायाम् । ऊर्दते । ऊर्दांचक्रे । ऊर्दिता । ऊर्दिष्यते । ऊर्दताम् । और्दत । ऊर्देत आशिषि— ऊर्दिषीष्ट । और्दिष्ट । और्दिष्यत । 'उपधायां च' इति धातोरुपधाभूतरेफात् पूर्वस्वादिको दीर्घः सर्वत्र । यथायोगं भावकर्मकर्मकर्तृषु ऊर्द्यते इत्यादि ॥

ऊर्दिदिषते । 'न न्द्राः संयोगादयः' इति द्वितीयस्यैकाचो नदराणां संयोगादीनां द्विर्वचननिषेधाद्दकारादिर्द्विरुच्यते ॥

---

* मानं मितिरिति ।

ऊर्दयति । और्दिदत् ।।

## कुर्द खुर्द गुर्द गुद क्रीडायामेव ।। २१-२४ ।।

अत्र कैयटपुरुषकारमैत्रेयादिषु तृतीयो न पठ्यते । संमता-मोघविस्तरचान्द्रेषु तु त्रयोपि पठ्यन्ते । गुदक्रीडा गुदविहार इति चरके । मैत्रेयकाश्यपौ गुद इत्यपि पृथग्धातुरिति । अत्रैकारो धातूनामनेकार्थत्वे ज्ञापक इत्युक्तम् । स्फूर्जेर्दीर्घोपदेशात् 'उपधायां च' इति दीर्घ एषां नेति चन्द्रः । मैत्रेयसंमतामोघविस्तरकारादयस्तु दीर्घत्वमिच्छन्ति । कूर्दते । चुकूर्दे । कूर्दिता । कूर्दिष्यते । कूर्दताम् । अकूर्दत । कूर्देत । आशिषि—कूर्दिषीष्ट । अकूर्दिष्ट अकूर्दिष्यत ।

भावे कूर्द्यते इत्यादि ।।

चुकूर्दिषते ।। चोकूर्द्यते ।। चोकूर्ति, चोकूर्दीति । चोकूर्तः । चोकूर्दाञ्चकार । चोकूर्दिता । इत्यादि । लङि तिप्सिपोर्हल्ङ्यादिलोपे 'वाऽवसाने' इति चर्त्वविकल्पः । अचोकूर्दीत्, अचोकूर्त्, अचोकूर्द् । सिपि तु 'दश्च' इति वा रुत्वमपि— अचोकूः । चान्द्रेऽपि मते 'रो रि' इति लोपे 'ढ्रलोपे' इति दीर्घस्य विद्यमानत्वादत्र न विशेषः ।।

कूर्दयति । अचुकूर्दत् । एवमितरयोरप्युदाहार्यम् ।।

गुदेः—गोदते । जुगुदे । गोदिता इत्यादि ।।

जुगुदिषते जुगोदिषते । गुदित्वा, गोदित्वा इत्यादि मुदिवन्नेयम् ।।

गुदम्—इगुपधलक्षणः कः । गोद इति पचाद्यजिति मैत्रेयः ।।

षूद क्षरणे ॥ २५ ॥

क्षरणं निस्सरणम् । अत्रायमकर्मकः । हिंसायामपि वर्तते, मधुसुदन इति । अत्रायं सकर्मकः । ण्यन्तोऽयं संस्कारेऽपि वर्तते, 'अग्निर्हव्यं शमिता सूदयाति'[1] इति । हव्यं हवनार्हं पशोर्हृदयादि. शमिता शामित्रोऽग्निः सूदयाति. संस्करोति इति । क्षरणस्वादुकरणनाशनार्थत्वं 'अहोरात्राणि मरुतो विलिष्टं सूदयन्तु'[2] इत्यत्राह भट्टभास्करः— तथा हि अहोरात्राणि मरुतश्च तव विलिष्टं विनाशितं विश्लिष्टं वा सूदयन्तु क्षारयन्तु, स्वादु कुर्वन्तु वा । यद्वा—यद्विलिष्टं यागायोग्यं यद्विरूपं विशसितं तद्विनाशयन्त्विति । क्षरणे[3] तु तव विलिष्टं न्यूनं पूरयन्त्विति पूरणार्थत्वं दृश्यते ॥

सूदते । सुषूदे । सूदिता । इत्यादि ॥

भावादौ सूद्यते इत्यादि ॥

सुसूदिषते— 'स्तौतिण्योरेव' इति नियमान्न षत्वम् ॥ सोसूद्यते ॥ सोसूत्ति ॥ सूदयति । सूदयते । असूषुदत् । 'णौ चङि' इति ह्रस्वत्वम् ॥

सूदिता— 'सूददीपदीक्षश्च' इत्यनुदात्तेल्लक्षणस्य युचो निषेधात् 'तृन्' इति सामान्यस्ताच्छीलिकस्तृन् ॥

मधुसूदनः— 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यवः' इति ल्युः ॥

सूदयति क्षरति क्षारयति रसानिति च सूदः पङ्कः पाचकश्च । 'इगुपधज्ञाप्रीकिरः कः' इति इगुपधत्वात् कर्तरि कः ॥

---

[1] तै. सं. ४-२-८ । [2] तै. सं. ५-२-१२ ।

[3] क्षुरे तु, क्षरे तु इति केषुचित् कोशेषु ।

अयं चुरादावपि ॥

ह्राद अव्यक्ते शब्दे ॥ २६ ॥

अव्यक्तशब्दो वाद्यादिघोषः । ह्रादते । जह्रादे । 'कुहोश्चुः' इत्यभ्यासहकारस्यान्तरतम्यात् झकारश्चुत्वं, तस्य 'अभ्यासे चर्च' इति जश्त्वं जकारः । ह्रादिता इत्यादि ॥.

भावे ह्राद्यते इत्यादि ॥

जिह्रादिषते ॥ जाह्राद्यते ॥ जाह्रादीति, जाह्राति । इत्यादि ॥

ह्रादयति । ह्रादयते । अजिह्रदत् । 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' इति स्मरत्यादीनां चङ्परे णौ लघुनि धात्वक्षरे परे इत्वापवादादत्वविधानाज्ज्ञापकादित्वविधौ 'येन नाव्यवधानं तेन व्यवहितेऽपि' इत्येकेन व्यवहिते भवतीति नियमानाश्रयणादभ्यासस्येत्वम् । दीर्घस्तु न भवति संयोग[1]परत्वेनालघुत्वात् ॥

ह्रदः—पचाद्यचि पृषोदरादित्वाद्ध्रस्वः ॥

माहिक[2]ह्रदो नाम वाहीकग्रामविशेषः, तत्र भवादिः माहिकह्रदीयः—'कन्थापलदनगरग्रामह्रदोत्तरपदात्' इति शेषेऽर्थे छः । 'वाहिकग्रामेभ्यश्च' इति प्राप्तयोः ठञ्ञिठयोरपवादः । 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति प्रत्यययादीनां फादीनां यथासङ्ख्यमायन्नादिविधानात् छस्येयादेशः । छविधौ निपातनाद्वा ह्रदस्य ह्रस्वः ॥

ह्रादी सुखे च ॥ २७ ॥

---

[1] गृह । [2] मु—मंहिकि ।

चकारादव्यक्ते शब्दे च । ह्लादते इत्यादि । ह्लादिवत् । विशेषस्त्वीदित्त्वात् 'श्वीदितो निष्ठायाम्' इतीडभावः, 'ह्लादो निष्ठायाम्' इत्युपधाह्रस्वश्च । तथा 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति निष्ठातकारस्य पूर्वदकारस्य च नकारौ । आह्लन्नः । आह्लन्नवान् ॥

स्वाद आस्वादने ॥ २८ ॥

स्वादते इत्यादि स्वदिवत् । अषोपदेशत्वात् असिस्वदत् इत्यत्रौ न षत्वम् । स्वादिना समानार्थोऽप्ययमाकारोपधसाम्यादिह पठितः । 'अज्दन्त्य' इति षोपदेशलक्षणे दन्त्यग्रहणेन केवलो दन्त्यो गृह्यते, न तु दन्त्योष्ठ्योऽपीत्ययमषोपदेशः स्वदिवत् ॥

पर्द कुत्सिते शब्दे ॥ २९ ॥

रेफवद्दान्तसंयोगान्तेषूर्दादिष्वयं न पठितः, शब्दविशेषार्थेन ह्लाद्यादिनाऽपि साम्यात् । स्वादिस्त्वाकारवत्संयोगमदित्वेन ह्लाद्यनुरोधेन मध्ये पठितः । इह कुत्सितः शब्दो गुदरवः । तदाह केशवस्वामी—'कौक्षे कर्दति पर्दते गुदरवे' इति । पर्दते ॥ पपर्दे ॥ पर्दिता ॥ पर्दिष्यते ॥ पर्दताम् ॥ अपर्दत ॥ पर्देत ॥ पार्दिषीष्ट ॥ अपर्दिष्ट ॥

भावे पर्द्यते इत्यादि ॥

पिपर्दिषते ॥ पापर्द्यते ॥ पापर्दीति पापर्ति इत्यादि । लङि तिप्सिपोहल्ङ्यादिलोपे वा चर्त्वम् । सिपि तु पक्षे 'दश्च' इति रुत्वं चोदाहार्यम् ॥

रङ्गन्त्यस्मिन् प्रेक्षकाणां मनांसीति रङ्गः—'हलश्च' इति संज्ञायामधिकरणे घञ् ।। रञ्जेर्वाऽयं द्रष्टव्यः ।।

लङ्गति । विलगितः—'अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम्' इति नलोपः । उपतापादन्यत्र लङ्गितः ।

अङ्गति । अङ्गत्यत्रावयवीति अङ्गम्—रङ्गवद्घञ् ।।

नाङ्गत्यत्रेति अङ्गः जनपदः—पूर्ववद्घञ् । अगिरगतौ विपरीतलक्षणयाऽत्र वर्तते, दर्श इत्यत्र दृशिवत् । न दृश्यतेऽस्मिन् चन्द्र इति हि दर्शशब्दो धूर्तस्वामिना व्युत्पादितः ।।

कल्याणान्यङ्गान्यस्याः सन्तीति अङ्गना—'अङ्गात्कल्याणे' इति पामादिपाठान्मत्वर्थीयो नः । विशिष्टं विहीनं वा अङ्गमस्येति व्यङ्गः तस्यापत्यं व्याङ्गिः 'अत इञ्' । 'स्वागतादीनां च' इति वृद्धिप्रतिषेधैजागमयोर्निषेधः । एवं स्वाङ्गिः इत्यत्रापि ।।

सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणः तापः, 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति' इति सर्वादेः पथ्याद्यन्तात् द्वितीयान्तात् व्याप्नोतीत्यर्थे खः ।।

अग्निः—'अङ्गेर्नलोपश्च' इति निप्रत्ययो नलोपश्च ।।

अग्निर्देवता अस्य आग्नेयं हविः—'सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः' इति ढक्प्रत्ययः । 'सर्वत्र' इति वचनादर्थान्तरेऽप्ययमेव ढक्प्रत्ययः ।।

अग्नीषोमौ, अग्नीवरुणौ—'ईदग्नेस्सोमवरुणयोः' इति देवताद्वन्द्वलक्षणस्यानङोऽपवाद ईकारः ।।

अग्नीवरुणौ देवता अस्य आग्निवारुणम्—'देवताद्वन्द्वे च इत्युभय-पदवृद्धिः । 'इद्वृद्धौ' इति वृद्धिमत्युत्तरपदे अग्नेरिकार ईत्वापवादः ॥

अग्नायी—'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' इति पुंयोगे ङीप्युदात्त ऐकारे चान्तादेशे आयादेशः ॥

अग्नायी देवताऽस्य आग्नेयम्—लिङ्गविशिष्टपरिभाषया 'सर्वत्राग्नि-कलिभ्यां ढक्' इति ढकि 'भस्याढे तद्धिते' इति 'पुंवद्भावपर्युदासे स्त्रीभ्यो ढको ग्रहणम्' इति कैयटादावुक्तत्वात्पुंवद्भावः ॥

अग्निमिन्धे इति अग्निमिन्धः—'भ्राष्ट्राग्न्योरिन्धे मुम्वक्तव्यः' इति मुम् ॥

अग्रम्—'रुद्रेन्द्राग्र' इति निपातनाद्रकि नलोपः ॥

अग्रे भवं अग्रिमम्—'अग्रादिपश्चाड्डिमच्' इति डिमच् ॥

अङ्गारः—'अङ्गिमदिमन्दिभ्य आरन्' इत्यारन् ॥

अङ्गुलिः—'ऋतन्यञ्जि' इत्यादिना उलिप्रत्ययः ॥

अङ्गुरिः—'वालमूल' इत्यादिना पक्षे रः ॥

पञ्चाङ्गुलयः प्रमाणमस्य पञ्चाङ्गुलः—'तद्धितार्थोत्तरपदसमाहारे च' तद्धितार्थे विषयभूते उत्तरपदे परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन समस्येते इति प्रमाणे तद्धितार्थे विषयभूते समासः । 'संख्यापूर्वो द्विगुः' इति द्विगुत्वे 'द्विगुश्च' इति तत्पुरुषश्चायं ; तत्र 'प्रमाणे द्वयसच्–दघ्नञ्–मात्रचः' इति प्रमाणोपाधिकादस्मात्प्रमाणिनि मात्रच्, तस्य 'द्विगोर्लुङ्नित्यम्' इति लुकि 'तत्पुरुषस्याङ्गुलेस्सङ्ख्याव्ययादेः' इत्यचि 'यस्येति च' इतीकारलोपः ॥

**अत्यङ्गुलम्**—'अत्यादयः क्रान्ताद्यर्थे' इति तत्पुरुषः अव्ययादित्वादच् ॥

शोभनाङ्गुलिः **स्वङ्गुलिः**, **अत्यङ्गुलिः**—'न पूजनात्' यान् शब्दानुपादाय समासान्तो विधीयते ते यदा पूजनवचनात्परे भवन्ति तदा समासान्तो नेत्यत्राचोऽभावः ॥

कुत्सिताङ्गुलिः **किमङ्गुलिः**—'किं क्षेपे' क्षेपे यः किंशब्दः स समानाधिकरणेन समर्थेन समस्यते इति तत्पुरुषः। 'किमः क्षेपे' इति क्षेपवचनादस्मात्परस्य समासान्तनिषेधात् अज्न भवति ॥

नाङ्गुलिः **अनङ्गुलिः**—'नञस्तत्पुरुषात्' इति समासान्तनिषेधः। नञः परोत्तरपदान्तात्तत्पुरुषात्समासान्ता नेति सूत्रार्थः ॥

पञ्चाङ्गुलिसदृशा अवयवा अस्य **पञ्चाङ्गुलः** एरण्डः, धान्यादीनां विक्षेपदारुश्च यं पादुलकमाहुः। 'अङ्गुलेर्दारुणि' इति बहुव्रीहौ षच् ॥

**अङ्गुलीयं** 'जिह्वामूलाङ्गुलेश्छः' इति सप्तम्यन्ताद्भवार्थे छः ॥

अङ्गुलीयमेव **अङ्गुलीयकम्**—संज्ञायां कन् ॥

वङ्गतीति **वङ्गः** जनपदः—अङ्गवद्व्युत्पत्तिः ॥

मङ्गतीति **मङ्गलम्**—'मङ्गेरलच्' इत्यलच् ॥

**तङ्गति। त्रङ्गति। श्रङ्गति। श्लङ्गति। इङ्गति। रिङ्गति। लिङ्गति।** इत्यादि ॥

**लिगि चित्रीकरणे इति चुरादौ** ॥

त्वगि कम्पने च ॥ १५७ ॥

त्वङ्गति ॥

युगि जुगि बुगि वर्जने ॥ १५८—१६० ॥

युङ्गति । युयुङ्ग । युङ्गिता । इत्यादि । जुङ्गति । बुङ्गति । इत्यादि ॥

घघ *हसने ॥ १६१ ॥

घघति । जघाघ । घघिता इत्यादि ॥

मघि मण्डने ॥ १६२ ॥

मङ्घति । मङ्घते कन्या स्वयमेव । अमङ्घिष्ट कन्या स्वयमेव । भूषाकर्मत्वान्न यक्चिणौ ॥

मङ्घनः—'क्रुधमण्डार्थेभ्यश्च' इति युच् ॥

शिघि आघ्राणे ॥ १६३ ॥

शिङ्घति ॥

शिङ्घानको रोगविशेषः—'लघुशिङ्घिधाञ्भ्यश्च†' इत्यानक-प्रत्ययः ॥

फक्कादय उदात्ता उदात्तेतः ॥

---

* घर्घ· † सिद्धान्तकौमुद्यादौ तु 'आनकश्शद्भियः । आणको लुधुशिङ्घाधाञ्भ्यः ।' इति पठ्यते ।

अथ क्रमप्राप्तांश्चवर्गान्तानात्मनेपदिन आह—

वर्च दीप्तौ ।। १६४ ।।

ईजन्ता एतदादय उदात्ता अनुदात्तेतः ।।

वर्चते । ववर्चे । वर्चिता । वर्चिष्यते वर्चताम् । अवर्चत । वर्चेत । आशिषि—वर्चिषीष्ट । अवर्चिष्ट । अवर्चिष्यत ।।

भावे वर्च्यते इत्यादि ।।

विवर्चिषते ।। वावर्च्यते । वावर्चीति, वावर्क्ति । अवावर्चीत्, अवावर्क् 'रात्सस्य' इति नियमान्न संयोगान्तलोपः ।।

अवावर्क् स्थाता इत्यादौ कुत्वस्यासिद्धत्वात् 'स्कोः' इति कलोपो न भवति । यद्वा—तत्र निमित्तनिमित्तिनोः समानपदस्थत्वे एव सलोप इतीह नैव प्रसङ्गः ।।

वर्चयति । अववर्चत् ।।

वर्चः—दीप्तिः पुरीषं च । 'असुन्' इत्यसुन् ।।

वर्चस्कं—पुरीषम् । संज्ञायां कन् । 'सोपदादौ' इति विसर्जनीयस्य सत्वं 'कुप्वोः' इत्यस्यापवादः ।।

ब्रह्मवर्चसम्, हस्तिवर्चसम्—'ब्रह्महस्तिभ्यां वर्चसः' इत्यच् समासान्तः ।।

पल्यवर्चसम्, राजवर्चसम्—'पल्यराजभ्यां च' इत्यच् ।।

ब्रह्मवर्चसस्य निमित्तं संयोग उत्पातो वा ब्रह्मवर्चस्यम्—तस्य निमित्तप्रकरणे 'ब्रह्मवर्चसादुपसङ्ख्यानम्' इति यत् ।।

वर्च्यम्—ण्यति 'चजोः कु घिण्यतोः' इति कुत्वं न भवति। 'न कादेः' इत्यत्र 'काद्यजिव्रजियाचिरुच्यादीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात्' इत्युक्तत्वात्। अस्यार्थः—'चजोः कुघिण्यतोः निष्ठायामनिटः' इति सूत्रं कर्तव्यम्। तेन 'न कादेः' 'अजिव्रज्योश्च' इति योगद्वयम्। 'यजयाचरुचप्रवचर्चश्च' इत्यत्र याचरुच्यृचिग्रहणं न कर्तव्यं भवतीति तेषां सेट्त्वादित्यभिप्रायः ॥

अयमत्र विवेकः—ये कादयोऽन्ये वा निष्ठायामनिटस्तेषां कुत्वं, ये तु सेटस्तेषां नेति। एवञ्चात्र मते ग्लुचादीनां कवर्गादित्वेऽपि निष्ठायामनिट्त्वात्कुत्वेन भाव्यम्। अत्र हरदत्तः—'यथोत्तरं मुनीनां प्रामाण्यं' इति वार्तिककारानुसारेण कुत्वस्य भावाभावौ व्यवस्थाप्याविति। कथं तर्हि **शोकः समुद्गः** इति, यतः शुच्युब्जी निष्ठायां सेटौ ॥ अत्र भाष्यं—शुच्युब्ज्योर्घञि कुत्वं वक्तव्यं इति। अत्र हरदत्तः—तच्च यथान्यासेऽपि वक्तव्यं घञ्येव यथा स्यात् ण्यति मा भूदिति तदेव वार्तिककारपक्षे विध्यर्थं भविष्यतीति ॥

**षच सेचने ॥ १६५ ॥**

अयं सेवनार्थोऽपि। तथा च 'अथ एनां महिमानः सचन्ते'* इत्यत्र क्षुरभट्टभास्करीययोः 'सचन्ते सेवन्ते' इति। निरुक्ते च—'सक्तुस्सचित इति सेव्यमानस्य' इति। अस्यैतौ वाचकावित्यर्थः ॥

'प्रन् महि त्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्ते'‡ इत्यत्र च सेवन्त इति ॥

---

* तै. सं. ४-३-११. † इत्यत्रर्क्षे. ‡ ऋक्सं. १-६०-६।

सचते । सेचे । सचिता । सचिष्यते । सचताम् । असचत । सचेत । आशिषि—सचिषीष्ट । असचिष्ट ।। असचिष्यत ।।

सिसचिषते—'स्तौतिण्योरेव' इत्यषत्वम् । सासच्यते । सासचीति सासक्ति ।।

साचयति । असीषचत् ।।

सक्तुः—'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन् । 'तितुत्र' इतीण्णिषेधः ।।

सक्तुलः—'सिध्मादिभ्यश्च' इति मत्वर्थे लच् ।।

सचिवः—बाहुलकाद्वप्रत्ययः इट् च । यद्वा—सचिः सेवा इन्प्रत्ययः; तां वातीति सचिवः । 'आतोनुपसर्गे कः' । यद्वा—'केशाद्वोन्यतरस्याम्' इति वप्रत्ययः 'अन्येभ्योपि दृश्यते' इति मणिवराजीवादिवदस्मादपि ।।

अयं समवाये स्वरितेदप्रे ।।

लोचृ दर्शने ।। १६६ ।।

लोचते । लुलोचे । लोचिता इत्यादि ।।

लुलोचिषते । लोलोच्यते । लोलोचीति, लोलोक्ति ।।

लोचयति । अलुलोचत् । ऋदित्त्वाण्णौ चङि ह्रस्वाभावः ।।

भाषार्थोऽयं चुरादौ ।।

शच व्यक्तायां वाचि ।। १६७ ।।

शचते । शेचे । शचिता । इत्यादि ।।

शची—इन्नन्तात् 'कृदिकारादक्तिनः' इति ङीष् ।।

श्वच श्वचि गतौ ॥ १६८-१६९ ॥

श्वचते । शश्वचे । श्वचिता ॥ श्वञ्चते । शश्वञ्चे । श्वञ्चिता इत्यादि । शच्यादयस्ताल्व्यादयः ॥

कच बन्धने ॥ १७० ॥

कचते । चकचे । कचिता । इत्यादि ॥

कचते यूनां मनांसि बध्नातीति कचः—पचाद्यच् ॥

काचः—'हलश्च' इति संज्ञायां घञ् ॥

कचि काचि दीप्तिबन्धनयोः ॥ १७१-१७२ ॥

कञ्चते । चकञ्चे । कञ्चिता ॥ काञ्चते । चकाञ्चे । काञ्चिता । इत्यादि ॥

कञ्चुकः—बाहुलकादुकप्रत्ययः ॥

काञ्चनम्—अनुदात्तेत्त्वाद्युच् ॥

काञ्चनस्य विकारः काञ्चनम्—'प्राणिरजतादिभ्योञ्' इति रजतादित्वादञ 'नित्यं वृद्धशरादिभ्यः' इति मयटोऽपवादः ॥

काञ्चिः, काञ्ची—इन्नन्तात् 'कृदिकारादक्तिनः' इति वा ङीष् ॥

काञ्चिकम्—सञ्ज्ञायां कन् ॥*

दीप्तौ चेति वक्तव्ये बन्धनग्रहणं प्रपञ्चार्थम् ॥

मच मुचि कल्कने ॥ १७३-१७४ ॥

* संज्ञायां कल्कने कन् ।

कल्कनं दम्भः शाठ्यं चेति मैत्रेयः । दम्भः कत्थनं वेति स्वामी । मचते । मेचे । मचिता ॥ मुञ्चते । मुमुञ्चे । मुञ्चिता इत्यादि । मुचेति चन्द्रः । तन्मते मोचते इत्यादि ॥

मुच्लृ मोक्षण इति तुदादौ ॥ मुच प्रमोचन इति चुरादौ ॥

मचि धारणोच्छ्रायपूजनेषु ॥ १७५ ॥

मञ्चते इत्यादि ॥

मञ्चः—पचाद्यच् । शाकटायनस्तु मुचिं हित्वा द्वावेव धातू पपाठ—मचि कल्कने । मच्लृ धारणोच्छ्रायपूजनेषु इति । तेन चानुदात्तेत्स्थाने इदित् क्रियते, तस्य च स्थाने ऌदित् । धनपालश्च शाकटायनानुसारी ॥

पचि व्यक्तीकरणे ॥ १७६ ॥

पञ्चते ॥

पङ्कः—'चजोः कु घिण्यतोः' इति कुत्वम् । वार्तिकमते न्यङ्क्वादिः द्रष्टव्यः । तेन हि निष्ठायामनिटः कुत्वमुच्यते ॥

पञ्चन्—बाहुलकात्कनिन् नित्यबहुवचनान्तः । तत्र 'ष्णान्ता षट्' इति षट्संज्ञाविधानात् 'षड्भ्यो लुक्' इति जश्शसोर्लुक् । पञ्चानां इत्यत्र 'षट्चतुर्भ्यश्च' इत्यामि नुटि 'नोपधायाः' नान्तस्योपधाया नामि दीर्घ इति दीर्घे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः । स्त्रियामपीदमेव रूपम्, 'न षट्स्वस्रादिभ्यः' इति टापो ङीपश्च निषेधात् । अस्ति च टापः प्रसङ्गो नकारे लुप्ते ॥

पञ्चानामपत्यं पाञ्चिः—बाह्वादित्वादिञ् । 'नस्तद्धिते' नान्तस्य भस्य तद्धिते टिलोप इति टिलोपः ॥

प[illegible] — 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्' इति 'तदस्य परिमाणम्' इति विषये तिप्रत्ययो निपात्यते

पञ्च परिमाणमस्य वर्गस्य पञ्चत्—'पञ्चद्दशतौ वर्गे वा' इति इत्यन्तो निपातितः । वाग्रहणात् 'सङ्ख्याया अतिशदन्तायाः कन्' इति कनि पञ्चकः ॥

पचेति दुर्गः । तथा वर्धमानोपि । यदाह—अनिड्विधौ पच्यादि* सूत्रे 'डु पचष्पाके पच व्यक्तीकरणे' इति । संमतायां तु वर्धमानवदुक्त्वा 'अन्यैस्त्वयमिदनुबन्धः पठ्यते' इत्युक्तम् । 'तिष्ठो गोत्रादीनि' इत्यत्र 'पचति गोत्रं' इत्युपादाय 'पच व्यक्तीकरणे' इति पठन् न्यासकारः परस्मैपदिनं च मन्यते ॥

डु पचष् पाके इत्यग्रे । पचि विस्तारवचने इति चुरादौ ॥

ष्टुच प्रसादे ॥ १७७ ॥

स्तोचते—'धात्वादेष्षस्सः', ष्टुत्वं निमित्ताभावान्न भवति । सत्वात्पूर्वं तु पूर्वत्रासिद्धत्वेन न भवति ॥

तुष्टुचे—'शर्पूर्वाः खयः' इति खयश्शेषः । स्तोचिता इत्यादि ॥

तुस्तुचिषते, तुस्तोचिषते, स्तुचित्वा, स्तोचित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः । 'स्तौतिण्योरेव' इति नियमात्सन्यषत्वम् ॥

---

* पचिवच्यादि, याचिवच्यादि ।

तोष्टुच्यते । तोष्टुचीति, तोष्टोक्ति ॥

स्तोचयति । अतुष्टुचत् ॥

**स्तोकः**—घञ् ॥

**उदश्वित्स्तोकम्**—अल्पमुदश्विदित्यर्थः । 'पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः' पोटादिभिः समानाधिकरणैः जातिवाचि सुबन्तं समस्यत इति तत्पुरुषः । अत्रैव निर्देशात् वार्तिककारमते कुत्वम् । स हि 'चजोः कु घिण्यतोर्निष्ठायामनिटः' इति सूत्रं न्यास्थत् ॥

**स्तोकान्मुक्तः, स्तोकेन मुक्तः**—स्तोकत्वेन मुक्त इत्यर्थः । 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य' इति तृतीयापञ्चम्यौ । असत्त्ववचनस्येति वचनात् **स्तोकेन विषेण हत** इति सत्त्ववचनात्तृतीयैव । स्तोकान्मुक्त इत्यत्र 'स्तोकान्तिक' इत्यादिना समासेऽपि 'पञ्चम्यास्स्तोकादिभ्यः' इत्यलुग्वचनात्तदेव रूपम् ॥

**संस्तोज** इति वर्णविकाराभ्युपगमादिति मैत्रेयः ॥

**ऋज गतिस्थानार्जनोपार्जनेषु ॥ १७८ ॥**

अयं पाठो मैत्रेयस्य । ऊर्जनेष्विति क्षीरस्वामिधनपालशाकटायनाः । **अर्जते**—'उर परः' इति रपरो गुणः ॥

**आनृजे**—अत्र ऋजशब्दस्य द्विर्वचने हलादिशेषे 'उरत्' इति ऋवर्णान्ताभ्यासत्वादकारो भवन् 'उरण्परः' इति रपरः । पुनर्हलादिशेषे 'अत आदेः' इति दीर्घे 'तस्मान्नुड् द्विहलः' इति नुट् । ऋकारैकदेशस्यापि रेफस्य हल्त्वाश्रयणात द्विहल्त्वम् । तत्र हि द्विहल्ग्रहणं गौणस्यैकदेशस्य हलः परिग्रहार्थम् । अन्यथा 'तस्मान्नुट्' इत्येव ब्रूयात् ।

नच आटतुः इत्येवमादावेकहल्यतिप्रसङ्गः, 'अश्नोतेश्च' इत्यनेन द्विहलो यदि भवत्यश्नोतेरेवेति नियमात्। अस्याश्नातिमात्रनिवृत्त्यर्थत्वे 'नाश्नः' इत्येव ब्रूयात्। 'ऐऔच' इत्यत्र 'द्विहल्ग्रहणं न करिष्यते' इति भाष्यम्। तत्र कयटे अवर्णोपधस्य यदि भवति अश्नोतेरेव इति नियमाश्रयेण द्विहल्ग्रहणं प्रत्याख्याय नुडुक्तः॥

अर्जिता। अर्जिष्यते। अर्जताम्। आर्जत। अर्जेत आशिषि—अर्जिषीष्ट। आर्जिष्ट। आर्जिष्यत। अजादित्वादाडागमः॥

**अर्जिजिषते**—सनीटि गुणे 'न न्द्राः' इति रेफवर्जं द्विरुच्यते॥

**अर्जयति। आर्जिजत्**॥

**प्रार्ज्यते**—इत्यत्र कर्मादौ यकि 'उपसर्गादृति धातौ' अवर्णान्तादुपसर्गादृकारादौ धातौ परे पूर्वपरयोर्वृद्धिरेकादेश इति आर्वृद्धिः॥

**अर्जित्वा**—'न क्त्वा सेट्' इत्यकित्त्वाद्गुणः॥

**ऋज्यम्**—'ऋदुपधाच्चाक्लृपिचृतेः' इति भावकर्मणोः क्यप्॥

**ऋजि भृजी भर्जने॥ १७९–१८०॥**

द्वितीय ईदित्। भर्जनं पाकविशेषः। ऋञ्जते। प्राञ्जते। 'उपसर्गादृति' इति वृद्धिः॥

ऋञ्जांचक्र आनृञ्जे इति संमतातरङ्गिण्योः। तदसत्। नुम्विधावुपदेशिवद्वचनात्। अत एव काश्यपमैत्रेयादयः सर्वे आममेवोदाजह्रुः॥

ऋञ्जिता । ऋञ्जिष्यते । आञ्जत । ऋञ्जेत । ऋञ्जिषीष्ट । आर्ञ्जिष्ट । आर्ञ्जिष्यत । 'आटश्च' इति वृद्धिः ॥

ऋञ्जिजिषते । 'नन्द्राः' इति नवजं द्विरुच्यते ॥

ऋञ्जयति । मा भवानृञ्जिजत् ॥

भर्जते । बिभृजे । भर्जिता इत्यादि ॥

बिभर्जिषते । बरीभृज्यते । 'रीगृदुपधस्य च' इति रीक् । बर्भृजीति, बरिभृजीति, बरीभृजीति । बर्भर्क्ति, बरिभर्क्ति, बरीभर्क्ति । इत्यादि 'रुग्रिकौ च लुकि' इति रुग्रिग्रीकः ॥

भर्जयति । अबीभृजत् । उरृद्वा । अन्यदा अबभर्जत् ।

भृक्तः, भृक्तवान्—'श्वीदितो निष्ठायाम्' इत्यनिट्त्वम् ॥

भर्गः—घञि कुत्वम् ॥

भ्रस्जो पाके इति तुदादौ ॥

एजृ भ्रेजृ भ्राजृ दीप्तौ ॥ १८१–१८३ ॥

एजते । प्रेजते । एङि पररूपम् ॥

एजाञ्चक्रे । एजिता । इत्यादि ॥

एजिजिषते ॥

एजयति । मा भवानेजिजत्—ऋदित्वान्नोपधाह्रस्वः । अन्यथैचत्यादिवद्द्विवचनात्पूर्वमेव ह्रस्वः स्यात् ॥

अङ्गमेजयतीति अङ्गमेजयः । एवं जनमेजयः । 'एजेः खश्' इति ण्यन्तादस्मात्कर्मण्युपपदे खश्प्रत्ययः । शित्त्वात्सार्वधातुकत्वाच्छपि

गुणायादेशौ। अन्यथा आर्धधातुकत्वात् 'ण्यल्लोपौ' इत्यादिना गुणं बाधित्वा णिलोपस्स्यात्। खित्त्वात् 'अरुर्द्विषदजन्तस्य' इति पूर्वपदस्य मुम्। वृत्तौ तु 'एजृ-कम्पने' इति परस्मैपदिनो ण्यन्तात्खशुक्तः ॥

उदेजयतीति उदेजयः—'अनुपसर्गाल्लिम्प' इत्यादिना उत्पूर्वाण्ण्यन्तादस्माच्छप्रत्यये शपि गुणायौ। अनुपसर्गग्रहणमर्थादस्य विशेषणम्, अत्राप्युपसर्गान्तरनिवृत्त्यर्थं च। तेन समुदेजयः इत्यादावपि णिलोपः ॥

भ्रेजते। बिभ्रेजे। भ्रेजिता। इत्यादि ॥

बिभ्रेजिषते। बेभ्रेज्यते। बेभ्रेजीति, बेभ्रेक्ति ॥

भ्रेजयति। अबिभ्रेजत्। 'ह्रस्वः' इतीकाराभ्यासस्य पूर्ववद्दित्त्वान्नोपधाह्रस्वः ॥

भ्राजते इत्यादि भ्रेजिवत्। 'व्रश्चभ्रस्ज' इत्यादिना झलि पदान्ते च विधीयमानं षत्वमस्य नास्ति। राजिसाहचर्यात्फणादिपठितस्यैव तत्र ग्रहणादिति मैत्रेयक्षीरस्वामिसम्मताकारादयः। एवं चावश्यपठितव्येन फणादिकेन भ्राजते इत्यादीनां सिद्धेरिह पाठोऽनार्ष इवेति न्यासोक्तं दुरुक्तम्। यद्वा—तत्रापीवशब्देन पूर्वोक्त एव पक्षस्सूच्यते ॥

भ्राजयति। अबिभ्रजत्। अबिभ्राजत्। 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्' इति चङ्परे णावुपधाह्रस्वविकल्पः। एवं चास्य ऋदित्त्वमनुदात्तेत्त्वमात्रफलम् ॥

भ्राजिष्णुः—'भुवश्च' इति चकारादिष्णुच् ॥

विभ्राक्—'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' इति ताच्छीलिके क्विपि 'चोः कुः' इति कुत्वम्। व्रश्चादिसूत्रे राजि-

साहचर्यात्फणादिकस्यैव ग्रहणमित्युक्तत्वान्न षत्वम् । यत्तु वृत्तौ क्विप्सूत्रे विभ्राट् इति कृतषत्वस्योदाहरणं तत् द्व्यनुबन्धकत्वेऽपीह फणादिकमपि गृह्यत इति सूचयितुं, न त्वस्यापि षत्वमस्तीति । अत्र रेचिरपि क्वचित्पठ्यते, तदनार्षमेव । यदाह भट्टभास्करः—'रेजते अग्ने पृथिवी मखेभ्यः'* इत्यत्र राजतेश्छान्दसमेत्वमिति ॥

ईज गतिकुत्सनयोः ॥ १८४ ॥

ईजते । ईजाञ्चक्रे । ईजिता इत्यादि ॥

कर्मादौ—ईज्यते इत्यादि ॥

ईजिजिषते ॥

ईजयति । मा भवानिजजत् द्विर्वचनात्पूर्वं 'णौ चङि' इति ह्रस्व इत्युक्तम् ॥

वर्चादय उदात्ता अनुदात्तेतः ॥

शुच शोके ॥ १८५ ॥

एतदादयो व्रजान्ता उदात्ता उदात्तेतः ॥

शोचति । शुशोच । शोचिता ॥ शोचिष्यति । शोचतु । अशोचत् । शोचेत् । आशिषि—शुच्यात् । अशोचीत् । अशोचिष्यत् । कर्मणि—शुच्यते इत्यादि ॥

शुशुचिषति, शुशोचिषति ॥ शुचित्वा, शोचित्वा । क्त्वाविकल्पः ॥

शोशुच्यते । शोशुचीति, शोशोक्ति ॥

* तै. सं. ४-१-११.

शोचयति । अशूशुचत् । 'दीर्घो लघोः' ।।

शोचनः—'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः' इति तच्छीलादौ युच् ।।

प्रशुचितः, प्रशोचितः । प्रशुचितवान्, प्रशोचितवान् । 'रलो व्युपधात्' इति कित्त्वविकल्पः ।।

शूद्रः—'शुचेर्दश्च' इति रक्प्रत्ययो दकारादेश उपधादीर्घश्च । 'शूद्रा चामहत्पूर्वा जातिः' इत्यजादिपाठात् 'जातेरस्त्रीविषयात्' इति ङीषं बाधित्वा स्त्रियां टापि शूद्रा । जातिरिति वचनात्पुंयोगे शूद्री इति ङीषेव भवति । अमहत्पूर्वेत्युक्तेः महाशूद्रशब्दाज्जातिलक्षणो ङीषेव भवति महाशूद्रीति । महाशूद्रशब्दो ह्याभीरजातिवचनः । अयमेव महापूर्वस्य प्रतिषेधो ज्ञापकः स्त्रीप्रत्ययेषु तदन्तविधेः ।।

शोकः—घञ् । वार्तिकमते 'तुन्दशोकयोः' इति निपातनात्कुत्वमेष्टव्यम् ।।

ई शुचिर् पूतीभावे इति दिवादौ ।।

कुच शब्दे तारे ।। १८६ ।।

कोचति । चुकोच । कोचिता इत्यादि पूर्ववत् ।।

कुचः—इगुपधात्कः । कुच गतौ इति स्वामी ।

अयं संपर्चनार्थो ज्वलादौ । पुनः पाठे प्रयोजनं तत्रैव वक्ष्यते ।।

संकोचनार्थश्चुरादौ* ।।

---

* तुदादौ ।

## कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः ॥ १८७—१८८ ॥

दन्त्योपधाविमौ । गतिकौटिल्याल्पीभावयोः । गतेः कौटिल्ये द्रव्याल्पत्वे चेति क्षीरस्वामी । कुञ्चति । चुकुञ्च । कुञ्चिता इत्यादि ॥

चुकुञ्चीति । चोकुच्यते । 'अनिदिताम्' इति नलोपः ।

चोकुञ्चीति—'लुमताङ्गस्य' इति निषेधात् प्रत्ययलक्षणेन नलोपो न भवति । चोकुङ्क्ति इति कुत्वेन चकारे निवर्तिते 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति ञकारे निवृत्ते अनुस्वारस्य पुनः सवर्णो ङकारः ॥

अचोकुङ्चीत् . अचोकुन् – संयोगान्तलोपे सति पूर्वनिमित्ताभावात् जकारेऽनुस्वारे च निवृत्ते नकारोऽवतिष्ठते ॥

कुञ्चयति । अचुकुञ्चत्—चङ्पेक्षः 'अनिदिताम्' इति नलोपो णिलोपस्य स्थानिवत्त्वात् 'असिद्धवदत्र' इत्यसिद्धत्वाद्वा व्यवधानान्न भवति ॥

कुचितः, कुचितवान्—'अनिदिताम्' इति नलोपः ॥

कुञ्चित्वा—इत्यत्र तु 'न क्त्वा सेट्' इत्यकित्त्वान्नलोपो न भवति । निकुचितमनेन इत्यादौ भावदिकर्मणोः 'उदुपधात्' इति कित्त्वविकल्पो न भवति 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति । तथा चास्याः परिभाषायाः प्रयोजनवार्तिकं उदुपधत्वमकित्त्वस्य निकुचितमिति । इदमेवास्य नोपधत्वे मानम् ।

अत एवोदित्पाठिनौ चन्द्राभरणकारौ प्रत्युक्तौ । यतस्तन्मते 'उदितो वा' इति क्त्वाथामिटो विकल्पनान्निष्ठायां 'यस्य विभाषा' इति प्रतिषेधात्तिटो निष्ठाया एवाभावः । इदित्पाठोऽप्यनेनैव प्रत्युक्तः । यत इदित्त्वान्नलोपस्य नैव प्रसङ्गः । निकुचतिरित्यत्र 'तितुत्रतथसिसुसरकसेषु च' इति तिप्रत्ययस्य विधीयमानमनिट्त्व 'तितुत्रेष्वग्रहादीनाम्' इत्युक्तत्वान्न भवति ॥

एवं क्रुञ्चति चुक्रुञ्च इत्यादि ॥

क्रुङ्—'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति क्विन् । तस्य सर्वापहारी लोपः । पदत्वे चकारस्य संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः' क्विन्प्रत्ययो यस्माद्विहितस्तस्य पदस्य कवर्गादेश इति नकारस्य ङकारः । संयोगान्तलोपात्पूर्वं प्रत्ययलक्षणेन 'अनिदिताम्' इति लोपो न भवति । ऋत्विगादिभिः निपातनैः साहचर्यात् अन्यस्याप्यलाक्षणिकस्य कार्यस्य ज्ञापनात् । तदुक्तं वृत्तौ—नलोपः कस्मान्न भवति, ऋत्विगित्यादिभिर्निपातनैः साहचर्यादिति । अत एव साहचर्यादुपपदाधिकारेऽपि केवलात्क्विन्प्रत्ययः ॥

क्रुञ्चा—अजादिपाठाद्धलन्तादपि टाप् ।

क्रुञ्चैव क्रौञ्चः—'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्प्रत्ययः ॥

क्रुञ्चा अस्मिन्नस्तीति क्रुञ्चकीयो देशः—'क्रुञ्चा ह्रस्वत्वं च' इति नडादिपाठात् चातुरर्थिकः छप्रत्ययः, तत्सन्नियोगेन तुगागमो ह्रस्वत्वं च । 'चोः कुः' इत्यत्र यदुक्तं वामनेन—"क्रुञ्चेत्यत्र 'झलि' इति वचनाज्जकारस्य चकारे झलि परतः कुत्वं न भवति, 'युजि क्रुञ्चां च' इति निपातनाद्वा । नकारोपधो वा धातुरयं रेफरहितः 'कुञ्च कौटिल्याल्पीभावयोः' इति पठ्यते ।

नलोपो निकुचित इत्यत्र दृश्यते । 'युजि क्रुञ्चां' इति कस्यैव रेफोधिको नलोपाभावश्च निपात्यते ' इति । तत्कुञ्चेर्नोपधत्वेऽपि क्रुञ्चाशब्दे न दोष इत्येवंपरं, न त्वयं धातुर्नास्ति सन्वा ञकारोपध इत्येवंपरम् । स्पष्टं चैवं तत्र न्यासपदमञ्जर्योः । 'न क्त्वा सेट्' इत्यत्र च द्वावपि धातू न्यासकृतोपात्तौ । तथा ऋत्विगादिसूत्रे जयादित्यश्च—क्रुञ्चेर्नलोपः कस्मान्न भवति निपातनैः साहचर्यादिति ॥

लुञ्च अपनयने ॥ १८९ ॥

लुञ्चति—इत्यादि पूर्ववत् ॥

लुचित्वा लुञ्चित्वा—'वञ्चि लुञ्च्यृतश्च' इति सेटः क्त्वः कित्त्वविकल्पनात् पक्षे नलोपः । केचिदमुमुदितं पठन्ति ; तदनार्षम्, राजदन्तादिषु 'मृष्टलुञ्चितं' इति पाठात् । उदित्त्वे हि क्त्वायां 'उदितो वा' इतीटो विकल्पनात् निष्ठायां 'यस्य विभाषा' इति प्रतिषेधाल्लुञ्चितमिति न स्यात् ॥

अञ्चु गतिपूजनयोः ॥ १९० ॥

अञ्चति । आनञ्च । अञ्चिता इत्यादि ॥

गतौ व्यस्यञ्चति इत्यत्र 'न गतिहिंसा' इति तन्निषेधः । पूजायां तु 'नाञ्चेः पूजायाम्' इति नलोपनिषेधात् अञ्च्यते गुरुः, अञ्चयाव इत्यादि भवति ॥

अञ्चित्वा, अङ्क्त्वा—'उदितो वा' इति इड्विकल्पः । इटि 'न क्त्वा सेट्' इत्यकित्त्वान्नलोपाभावः॥

निष्ठायां 'यस्य विभाषा' इतीटः प्रतिषेधात् समक्तम् इति 'अञ्चोनपादाने' इति निष्ठानत्वम्। अपादाने तु उदक्तमुदकं कूपात् इति। पूजायां तु क्त्वानिष्ठयोः 'उदितो वा' इति विकल्पं 'यस्य विभाषा' इति निषेधं च बाधित्वा 'अञ्चेः पूजायाम्' इति नित्यमिट्। अञ्चित्वा गुरून् अञ्चिता अस्य गुरव इत्यत्र 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाते क्तः। मतिरिच्छा, बुद्धिर्ज्ञानम्, पूजा सत्कारः, 'क्तस्य च वर्तमाने' इति, न लोकाव्यय इति निषेधं बाधित्वा कर्तरि षष्ठी। अस्याश्च 'क्तेन च पूजायां' इति समासो निषिध्यते। 'पूजितो यः सुरासुरैः' इत्यत्र वर्तमानक्तेन तक्रकौण्डिन्यन्यायेन भूते क्तस्य बाधात् तृतीया चिन्त्या। यद्वा—तेनेत्यधिकारे उपज्ञात इति भूते क्तेन निर्देशात् अयं वर्तमानक्तेन न बाध्यत इति सामान्येन ज्ञापकाश्रयणे नायं प्रयोगः समर्थनीयः॥

तैलमुदच्यतेऽस्मिन्निति तैलोदङ्कः चर्मभस्त्रिकादिः। 'उदङ्कोऽनुदके' इति घञि निपात्यते। उदके तु उदकोदञ्चनम्। ल्युट्। 'पुंसि संज्ञायाम्' इति घस्तु न प्रत्युदाहृतः, घघञो रूपे स्वरे वा विशेषाभावात्। घञ्यपि कृदुत्तरप्रकृतिस्वरमाद्युदात्तत्वं बाधित्वा 'थाथघञ्क्ताजबित्रकाणाम्' इति उत्तरपदमन्तोदात्तमेव॥

प्रत्यञ्चतीति प्रत्यङ—'ऋत्विक्' इत्यादिना क्विनि 'अनिदिताम्' इत्यादिना नलोपे सौ 'उगिदचां सर्वनामस्थाने' इति नुमि हल्ङ्यादिसंयोगान्तलोपयोः 'क्विन्प्रत्ययस्य कुः' इति कुत्वं ङकारः। प्रत्यञ्चौ इत्यादि। भसंज्ञायां तु 'अचः' लुप्तनकारस्याञ्चतेरकारस्य लोपो भसंज्ञायामित्यल्लोपे 'चौ' लुप्तनकाराकारेऽञ्चतौ परे पूर्वपदस्य दीर्घः इति दीर्घे

प्रतीचः इत्यादि । हलादौ जश्त्वे प्रत्यग्भ्याम् इत्यादि । प्रत्यक्षु इत्यत्र 'खरि च' इति चर्त्वम् । नपुंसके तु 'स्वमोर्नपुंसकात्' इति लुकि प्रत्यक् । द्विवचनयोः 'नपुंसकाच्च' इति शीभावे भत्वे पूर्ववदल्लोप-दीर्घयोः प्रतीची । 'जश्शसोश्शिः' इति तस्य सर्वनामस्थानत्वात् 'नपुंसकस्य झलचः' इति नुमि प्रत्यञ्चि । शेषं पूर्ववत् । स्त्रियां प्रतीची— 'अञ्चतेश्चोपसङ्ख्यानं' इति ङीपि भत्वे पूर्ववदल्लोपदीर्घत्वे । पूजायां सर्वत्र नकारस्य लोपनिषेधाच्छ्रवणम् । अत एव 'अचः' 'चौ' इति अल्लोपदीर्घत्वे अपि न भवतः—प्रत्यङ् प्रत्यञ्चौ इत्यादि । पदत्वे संयोगान्तलोपे 'क्विन्प्रत्ययस्य' इति कुत्वं ङकारः । सप्तमीबहुवचने 'ङ्णोः कुक्टुक् शरि' इति ङकारणकारयोः पदान्तयोर्यथासङ्ख्यं कुक्टुकौ शरि वा इति कुकि तस्य 'खयो द्वितीयाः शरि पौष्करसादेः' इति वा खकारे प्रत्यङ्क्षु, प्रत्यङ्षु, प्रत्यङ्ख्षु इति त्रीणि रूपाणि । नपुंसके शिभाव शीभावावेव विशेषः ॥

उत्पूर्वत्वे 'उद ईत्' इति उदः परस्य लुप्तनकारस्याञ्चतेरादे भसंज्ञायामीकारे उदीचः इत्यादि । अन्यत्सर्वं प्रत्यक्शब्दवत् ।

प्रतीच्यादिभ्यो 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देश कालेष्वस्तातिः' इति दिगादिवृत्तिभ्यस्सप्तम्याद्यन्तेभ्यस्स्वार्थे वाऽस्तातिः । दिशि दृष्टः शब्द इह दिक्शब्दः । 'अञ्चेर्लुक्' इत्यस्तातेर्लुक् । 'लुक्त-द्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् । प्रत्यक् वसति, प्रत्यक् आगतः, प्रत्यक् रमणीयम् इत्यादि । प्रत्ययलक्षणेन तद्धितान्तत्वात् 'तद्धितश्चासर्व-विभक्तिः' इति अव्ययत्वात्सुपो लुक् । अस्तातेरभावे प्रतीच्यां वसति । प्रतीच्या आगतः । प्रतीची रमणीया, इत्यादि ॥

प्रागेव पुरुषः प्राचीनः, प्रागेव कुलं प्राचीनं, प्राच्येव ब्राह्मणी प्राचीना—'विभाषाञ्चेरदिक् स्त्रियाम्' इत्यञ्चत्यन्तात् प्रातिपदिकात्स्वार्थे वा खः। 'अदिक्स्त्रियाम्' इत्युक्तत्वात् दिग्वृत्तेरप्यस्तात्युत्तरादव्ययाद-लिङ्गादस्त्रीवृत्तित्वात्खो भवति प्राचीनं दि[illegible] इति। यदा सप्तमीपञ्चम्यर्था-दस्मात् खस्तदाऽपि सप्तमीपञ्चम्योरर्थस्याभिहितत्वात् प्रातिपदिकार्थत्वाच्च प्रथमैव, प्राचीनं दिशि वसति, प्राचीनं दिश आगत इति। तथा च स्थानिवत्सूत्रे भाष्यम्—'प्राचीनं ग्रामादाम्राः' इति। प्राचि देश इत्यर्थः। खान्तोऽयं स्वभावान्नपुंसकलिङ्गः॥

प्राच्यम्, अवाच्यम्, उदीच्यम् प्रतीच्यम्—'द्युप्रागपागुदक्प्रतीचो यत्' इति शैषिको यत्॥

सम्यङ्—'समस्समि' इत्यञ्चत्यन्त उत्तरपदे समः सम्यादेशः॥

तिर्यङ्—'तिरसस्तिर्यलोपे' इति 'अचः' इति लोपाभावे तिर्यादेशो यण्, लोपे तु तिरश्च इत्यादि॥

सहाञ्चतीति सध्र्यङ्—'सहस्य सध्रिः' इत्यञ्चतावप्रत्ययान्त उत्तरपदे सध्र्यादेशः॥

विष्वगञ्चतीति विष्वद्र्यङ् देवानञ्चतीति देवद्र्यङ्—'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति टेरद्र्यादेशोऽञ्चतावप्रत्ययान्त उत्तरपदे। चकारात्सर्वनाम्नश्च सर्वद्र्यङ् इत्यादि। अदसो द्र्यादेशे मतभेदः। 'अदसोऽसेर्दादु दो मः' इति असकारान्तस्यादसो दकारात्परस्य वर्णस्य विधीयमानमुत्वमकाररेफयोर्द्वयोरपि, तथा 'दो म' इति मत्वमपि द्वयोरपि दकारयोरिति अमुमुयङ् इति भवतीति केचित्। अद्रे रेफादेशस्योकारस्य तदि-

कारापेक्षो यण् उत्वस्य पूर्वत्रासिद्धत्वान्न भवति। शसादौ भत्वे 'अचः' इत्यल्लोपे 'चौ' इति अद्रेरिकारस्य दीर्घे पूर्ववदुकारस्य रेफादेशस्य यणभावे अमुमुईचः इत्यादि। अपरे तूत्वमत्वे अन्त्यसदेशयोरेव रेफद-कारयोरिति अदमुयङ् इति रूपं प्रतिपन्नाः। अत्रापि पूर्ववदुकारस्य यण-भावः शसादावल्लोपादि च। अन्ये तु 'असेः' इति पदं अः सेः यस्य सकारस्यान्तिकोऽकारो यस्येति व्याचक्षणा अद्र्यादेशे त्यदाद्यत्वाभावान्नो-त्वमत्वे इति अदद्र्यङ् इति रूपमाहुः। तथा च श्लोकवार्तिकम्—

अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते॥

इति॥

अञ्चु गतियाचनयोः इत्यग्रे स्वरितेत्। विशेषणार्थोऽयं चुरादौ*॥

वञ्चु चञ्चु तञ्चु त्वञ्चु म्रुञ्चु म्लुचु ग्लुचु गत्यर्थाः ॥ १९१–१९७ ॥

वञ्चति। ववञ्च। वञ्चिता इत्यादि॥

आशीर्लिङि यासुटः कित्त्वादनुनासिकलोपे—वच्यात्॥

विवञ्चिषति॥ वनीवच्यते। 'नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतप-दस्कन्दाम्' इति यङ्यङ्लुकोरभ्यासस्य नीगागमः॥

वनीवञ्चीति, वनीवङ्क्ति। यङो लुका लुप्तत्वान्नलोपाभावः। वनीवक्तः इत्यादौ तसादीनां ङित्त्वेन नलोपः॥

---

* ....णार्थो युजादौ।

माणवकं वञ्चयते—विप्रलभते इत्यर्थः । 'गृधिवञ्च्योः प्रलम्भने' इति ण्यन्ताभ्यामाभ्यामकर्त्रभिप्रायेऽपि तङ् । प्रलम्भनं मिथ्याफलाख्यानम् । अतोन्यत्र वञ्चयति, वञ्चयते इत्युभयं भवति ॥

वङ्क्त्वा, वञ्चित्वा वचित्वा— 'उदितो वा' इतीड्विकल्पः 'वञ्चिलुञ्च्यृतश्च' इति सेटः क्त्वो वा कित्त्वविधानात्पक्षे नलोपः ।

वक्तः वक्तवान्—'यस्य विभाषा' इत्यनिट्त्वम् ।

वञ्च्यं वञ्चन्ति वणिजः—गन्तव्यं गच्छन्तीत्यर्थः । 'ऋहलोर्ण्यत्' इति ण्यति 'चजोः कु घिण्ण्यतोः' इति कुत्वं 'वञ्चेर्गतौ' इति निषिध्यते । अन्यत्र वङ्क्यं काष्ठं इति कुत्वं भवति । कुटिलमित्यर्थः ॥

वक्रम्—'स्फायितञ्चि' इत्यादिना रक् ॥

चञ्चति इत्यादि पूर्ववत् ॥

चञ्चत् । चञ्चन्निव कश्चित् विशेषः चञ्चत्कः—यश्च मण्यादिः स्वयमचञ्चन्नपि प्रभया चञ्चन्निव लक्ष्यते सोपि चञ्चत्कः । 'स्थूलादिभ्यः प्रकारवचने कन्' इत्यत्र चञ्चद्बृहतोरुपसङ्ख्यानात्कन् । प्रकारश्च भेदस्सादृश्यं च । अपरे—'चञ्चाबृहतोरुपसंख्यानं' इति पठन्ति । तृणमयः पुरुषश्चञ्चा, तत्प्रकारश्चञ्चकः 'केऽणः' इति ह्रस्वः ॥

तञ्चति ॥

तक्रम्—'स्फायितञ्चि' इत्यादिना रक् ॥

त्वञ्चति ॥ म्रुञ्चति ॥ म्लुञ्चति । म्रोचति ॥ म्लोचति । अम्रुचत्, अम्रोचीत् । अम्लुचत्, अम्लोचीत् । जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' इति च्लेर्वाऽङ् ।

मुम्रुचिषति, मुम्रोचिषति ।। म्रुचित्वा, म्रोचित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः ।।

भावादिकर्मणोः 'उदुपधात्' इति कित्त्वविकल्पनात् म्रुचितमनेन, म्रोचितमनेन, इति । एवं म्लुचेरपि । सर्वेषामुदित्त्वेन क्त्वाया-मिड्विकल्पनात् निष्ठायामनिट्त्वम् ।।

वञ्चु प्रलम्भने इति चुरादौ । तञ्चू संकोचने इति रुधादौ ।

## ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे ।। १९८–२०१ ।।

ग्रोचति ।। जुग्रोच ।। ग्रोचिता इत्यादि ।।

ग्लोचति इत्यादि ग्रुचिवत्* । जॄस्तम्भुसूत्रे ग्रुचिमपि केचित्पठन्ति ।।

कोजति ।। खोजति । इमावपि ग्रुचिवत्.* अङभावो विशेषः । प्रनिकोजति, प्रनिखोजति 'शेषे विभाषा' इति उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं तत्रैव सूत्रे अकखादावषान्त उपदेशे इति पर्युदासान्न भवति । शेषश्च गदादिव्यतिरिक्तो धातुः ।।

ग्रोकः, ग्रोक्यम्—घञ्ण्यतोः 'चजोः कु घिण्यतोः निष्ठायामनिटः' इति वार्तिकसूत्रेण कुत्वम् ।।

## ग्लुञ्चु षस्ज गतौ ।। २०२–२०३ ।।

ग्लुञ्चति ।। जग्लुञ्च ।। ग्लुञ्चिता इत्यादि ।।

लुङि 'जॄस्तम्भु' इत्यादिना वाऽङि नलोपे—अग्लुचत् अन्यदा सिचि अग्लुञ्चीत् । अङ्विधौ ग्लुचिग्लुञ्च्योरेकतरोपादानेनापि-

---

* म्लुचिवत्.

अग्लुचत्, अग्लोचीत् अग्लुञ्चीत् इति रूपत्रये सिद्ध उभयोपादानमर्थभेदादिति केचित्। अपरे तूभयोरुपादानसामर्थ्यात् ग्लुञ्चेर्नलोपो न भवतीति अग्लुञ्चत् इति चतुर्थमपि रूपमाहुः। इदमुद्धाष्यं, अन्यतरोपादानेनापि रूपत्रयस्य सिद्धेरन्यतरच्छक्यमकर्तुमिति प्रतिपादितत्वात्। अनेकार्थत्वाद्धातूनां अत्र विषये अर्थभेदो न प्रयोजक इति तत्र कैयटे॥

ग्लुचित्वा। ग्लुक्त्वा॥

सज्जति—धात्वादेष्षस्से द्वितीयस्य सकारस्य श्चुत्वेन शकारे तस्य 'झलाञ्जश् झशि' इति जश्त्वेन जकारः॥

ससज्ज। सज्जिता इत्यादि॥

सिसज्जिषति सिषज्जयिषति—'स्तौतिण्योरेव' इति नियमादणावषत्वम्। 'हेतुमति च' इत्यत्र 'यदभिप्रायेषु सज्जन्ते' इति भाष्यप्रयोगादयमात्मनेपद्यपि। अतोऽस्यात्मनेपदित्वं दूषयन्तो वर्धमानक्षीरस्वाम्यादय एव दुष्टाः। अत्र सश्चिमपि केचित्पठन्ति। 'तामजिह्म असश्चत'* इत्यादि च दृश्यते॥

## गुजि अव्यक्ते शब्दे ॥२०४॥

गुञ्जति। जुगुञ्ज। गुञ्जिता इत्यादि॥

गुञ्ज्यते। जोगुञ्ज्यते इदित्वान्नलोपाभावः। अत्र स्वामी—'अनिदित्येके' इति भूसूत्रे। सुधाकरस्तु—अनिदित्पारायणेष्वपाठि लक्ष्ये पुनरिदिदविगीत इति। शाकटायनस्तु—द्वावपि पपाठ॥

---

* तै. आ. १-११.

गुज शब्दे इति तुदादौ

## अर्च पूजायाम् ॥ २०५ ॥

अर्चति ॥ आनर्च ॥ अर्चिता इत्यादि । अयं युजादौ स्वरितेत्पठिष्यते । तत एवार्चतीति सिद्धे क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थ इह पाठः । अयमात्मनेपदी इति शाकटायनः । प्रयोजनं तु तन्मते क्रियाफलस्याकर्तृगामित्वेऽपि तङ् । 'यः पूर्णादुदचति '* 'अवीरघ्नीरुदचन्त्वापः '† इत्यदिदर्शनात् 'अच इत्येके ' इत्याभरणोक्तं युक्तम् ॥

## म्लेच्छ अव्यक्ते शब्दे ॥ २०६ ॥

इहाव्यक्तशब्दोऽस्फुटशब्दोऽपशब्दश्च । तदुक्तं पस्पशायां 'तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः ' इति । न म्लेच्छितवा इत्यस्य पर्यायो नापभाषितवा इति कैयटे । म्लेच्छति ॥ मिम्लेच्छ ॥ म्लेच्छिता इत्यादि । 'दीर्घात् ' दीर्घाच्छकारे परे दीर्घस्य तुगिति तुक् । 'तस्मिन्निति निर्दिष्टे पूर्वस्य ' इति सप्तमीनिर्देशे पूर्वस्य षष्ठी प्रकल्प्येति दीर्घस्येति लाभः । ननु 'तस्मादित्युत्तरस्य ' इति पञ्चमीनिर्देशे उत्तरस्य षष्ठी प्रकल्प्येत्युक्तत्वादिह चानवकाशया 'दीर्घात् ' इति पञ्चम्या 'छे च ' इत्यत्र सावकाशायाः छ इति सप्तम्या एव षष्ठी प्रकॢप्तिर्युक्ता, ततश्च तुकः कित्त्वेन चकारात्परत्वे श्चुत्वचर्त्वयोः म्लेच्चति इति द्विचकारकं रूपं स्यात्— नैष दोषः, यतः 'विभाषा सेनासुराच्छाया ' इति निर्देशाल्लिङ्गात् पञ्चम्या एव षष्ठी प्रकल्पयिष्यते ॥

---

* तै. सं. ३-५-६, † तै. मं १-१.

मिम्लेच्छिषति ॥ मेम्लेच्छ्यते ॥ मेम्लेच्छीति, मेम्लेष्टि । मेम्लेष्टः । इत्यादि । झलि व्रश्चादिना षत्वे ष्टुत्वम् ॥

मेम्लेक्षि—'षढोः कः सि' इति कत्वे षत्वम् । मेम्लेश्मि । मेम्लेश्मः इत्यत्र 'च्छ्वोः शूडनुनासिके च' इति छकारवकारयो- र्यथासङ्ख्यं शकारोठावादेशौ भवतः । अनुनासिकादौ प्रत्यये क्वौ झलादौ च ङिति इति छकारस्य शकारः । अयं च 'क्रमश्च क्त्वि च्छ्वोः' इति निर्देशात्सतुक्कस्य । अन्त्यादेशस्तु न भवति 'नानर्थकेऽलोऽन्त्यविधिः' इति ; नडो ङित्करणाद्वा, अ- न्त्यादेशे विश्न इत्यत्रालघूपधत्वादेव गुणाप्रसङ्गात् किं ङित्वेन । अत एव ङित्वाच्छ्वोरिति निर्देशः सतुक्कस्येत्यपि ज्ञायते । ये तूठ्विधौ क्ङितीति नानुवर्तयन्ति तेषां झलादिमात्रे शकारे कृते तस्यैव व्रश्चादिना षत्वं द्रष्टव्यम् । अत्र मते तत्र छग्रहणं व्यर्थं स्यात् । वृत्तिप्रदीपे तु वितुक्कस्य शकारादेश उक्तः । तुगभावस्तु अकृतव्यूहाः पाणिनीयाः, कृतमपि शास्त्रं निवर्तयन्तीति ॥

म्लिष्टम्—'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थ- मनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु' इति अविस्पष्टार्थे निपा- तितः । अपशब्दे तु म्लेच्छितं इति भवति । अस्य शपि पाठो म्लेच्छन्ती इति शप्श्यनोर्नित्यम्' इति नित्यनुमर्थं, शे हि विकल्पस्स्यात् स्वरे च भेदः, शपि शपः पित्वात् 'अनुदात्तौ सुप्पितौ' इति अनुदात्तः, शस्तु प्रत्ययस्वरेणाद्युदात्तः । एवमी- दृशामन्येषामपि धातूना विकरणभेदे फलं नेयम् । अयं चुरादावपि ॥

## लच्छ लाच्छि लक्षणे ॥ २०७–२०८ ॥

लच्छति ॥ ललच्छ ॥ लच्छिता, इत्यादि । 'छे च'

ह्रस्वस्य छे परतस्तुगिति तुक् । अलच्छीत् इत्यत्रान्तरङ्गत्वात्पूर्वं तुकि अकारस्यालघुत्वात् 'अतो हलादेः' इति वृद्धिर्न भवति । तथा ललच्छ लच्छकः इत्यादौ 'अत उपधायाः' इति वृद्धि— रनुपधात्वान्न भवति । लाञ्छति इत्यादि पूर्ववत् । लालाञ्छ्यते इत्यादाविदित्त्वात् 'अनिदितां' इति न लोपो न भवति ॥

लाञ्छेः क्विप्च ' इति सोपपदनिरुपपदसाधारणे कर्तरि क्विपि तस्य लोपे 'च्छ्वोश्शूठ्' इत्यत्र द्विचकारको निर्देशः एकः सतुकः अपरः केवल इति न्यासपदमञ्जर्यादिषूक्तत्वात् लान्, लांशौ, लांशः इत्यादि भवति । च्छ्वोः' इति निर्देशे पूर्वं वितुक्क- सतुक्कयोः समाहारद्वन्द्वे पश्चाद्वकारेण इतरेतरयोग इति द्विवचन- यथापञ्ज्चयोरुपपत्तिः । 'द्वन्द्वाच्चुदषहान्तात्' इति समासान्त सौत्रत्वान्न भवति । हरदत्तस्तु — सतुक्कछकारवकारयोः समाहार- द्वन्द्वे पश्चात् वितुक्केनेतरेतरयोग इति समासान्ताभावो द्विवचनोप- पत्तिश्चेति । अत्र मते सतुक्कस्यापि छकारस्योठ् स्यादिति तद- भावे यत्नः कर्तव्यः । एवं च यङ्लुक्यपि जश्त्वे लालांष्टि, लालांष्टः, इत्यादिपूर्ववद्भवति । शूड्विधौ क्ङिद्ग्रहणानुवृत्तिपक्षे लालांष्टि इत्यादौ व्रश्चादिसूत्रे चग्रहणेन षत्वम् । तत्रापि पूर्व- वत्केवलोऽपि छो गृह्यते ॥

## वाञ्छि इच्छायाम् ॥ २०९ ॥

वाञ्छति इत्यादि लाञ्छिवत्

## आञ्छि आयामे ॥ २१० ॥

आञ्छति आञ्छा । अत्र लिट्यभ्यासह्रस्वे 'अत आदेः' इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थमिति न्यासकारहरद- त्तादिभिः प्रतिपादितत्वात् दीर्घाभावान्नुडभावे सवर्णदीर्घः । अन्ये

तु—तपरकरणं मुखसुखार्थमिति आनाञ्छ इत्युदाहरन्ति इति मैत्रेयः । आञ्छिता इत्यादि ॥

आञ्छिच्छिषति—'न न्द्राः' इति नकारवर्जं द्वितीयैकाच् द्विरुच्यते ॥

आञ्छयति ॥ आञ्छिच्छत् ॥

ह्रीच्छ लज्जायाम् ॥ २११ ॥

ह्रीच्छति । जिह्रीच्छ । ह्रीच्छिता इत्यादि म्लेच्छिवत् ॥ ह्री लज्जायां इति जुहोत्यादौ ॥

हुर्छा कौटिल्ये । २१२ ॥

इह कौटिल्यमपसरणमिति मैत्रेयस्य मतम् । हूर्छति जुहूर्छ । हूर्छिता, इत्यादि । 'उपधायां च' इतीको दीर्घः ॥

जुहूर्छिषति ॥ जोहूर्छ्यते ; जोहूर्ति । जोहूर्तः । जोहूर्छति । जोहूर्षि । जोहूर्मि । जोहूर्च्छ्वः । जोहूर्मः । 'राल्लोपः' इति रेफात्परयोः च्छ्वोर्लोपः क्वौ झलादावनुनासिकादौ च प्रत्यये । अत्र सतुक्कस्य छस्यासंभवात् केवलो गृह्यत इति वृत्त्यादौ ॥

हूः, हुरौ, हुरः—'राल्लोपः' तत्र पदत्वे 'र्वोरुपधाया दीर्घः' इति रेफवकारान्तस्य धातोः परस्योपधाया इको दीर्घ इति इको दीर्घः ॥

हूर्णः, हूर्णवान्—'आदितश्च' इत्यनिट्त्वे निष्ठायां राल्लोपे 'रदाभ्याम्' इति नत्वे 'रषाभ्याम्' इति णत्वम् । भावादि-

कर्मणोस्तु 'विभाषा भावादिकर्मणोः' इति आदितो निष्ठायाः पक्षे इडविधानात् हूर्णमनेन, हूर्छितमनेन, इत्यादि द्रष्टव्यम् ।।

मुर्छा मोहसमुच्छ्राययोः ॥ २१३ ॥

हुर्छिवत् । विशेषस्त्वनिटो निष्ठायां 'न ध्याख्यापॄमूर्छिमदाम्' इति नत्वनिषेधः । मूर्तः, मूर्तवान्, मूर्तमनेन इत्यादि ।।

मूर्छाऽस्य सञ्जाता मूर्छितः—'तदस्य सञ्जातं तारकादिभ्य इतच्' तदिति प्रथमासमर्थात् सञ्जातोपाधिकादस्येत्यर्थे इतजितीतच् ।।

स्फुर्छा विस्तृतौ ॥ २१४ ॥

स्फूर्छति । पुस्फूर्छ, इत्यादि पूर्ववत् अभ्यासे खयश्शेषः ।।

युच्छ प्रमादे ॥ २१५ ॥

युच्छति । युयुच्छ । युच्छिता, इत्यादि म्लेच्छादिवत् । अन्तरङ्गत्वात्तुकि अलघूपधत्वान्न गुणः । 'वार्णादाङ्गं बलीयः' इत्याङ्गस्य बलीयस्त्वं यत्राङ्गवार्णयोर्युगपत्प्राप्तिः समानाश्रयत्वं च तत्रेति इह वैपरीत्यान्न भवति ।।

उछि उञ्छे ॥ २१६ ॥

उञ्छो धान्यश आदानं कणिशाद्यर्जनं शिलम् ।।

इति यादवप्रकाशः । एवं विज्ञानेश्वरोऽपि । 'उञ्छति' सूत्रे 'उञ्छति उच्चिनोतीत्यर्थः' इति न्यासः । 'बदराण्युञ्छति बादरिकः । श्यामाकान्युञ्छति श्यामाकिकः' इत्युदाहरतो वृत्ति-

कारस्यापि व्यापित्वेनोच्चय एवार्थ इत्यभिप्रायो लक्ष्यते। उञ्छति। उञ्छाञ्चकार। उञ्छिता, इत्यादि। इदित्त्वात् उञ्छ्यते इत्यादौ नलोपो न भवति॥

उञ्चिच्छिषति—'न न्द्राः' इति छादेर्द्विर्वचनम्। अभ्यासस्य चर्त्वे ह्रस्वे 'छे च' इति तुकि हलादिशेषो न भवति, अवयवभक्तत्वेनाभ्यासभक्तत्वाभावात्। न च स्वङ्गुलिर्देवदत्त इत्यादिवत् इहावयवावयवस्य समुदायावयवत्वम्। यतः 'छे च' इत्यत्रागमिनोऽभावादेव पूर्वसूत्रात् ह्रस्वस्येत्यनुवृत्तिसिद्धावपि चकारेण तदनुकृष्यते। पूर्वसूत्रे ह्रस्वान्तस्येति स्थितम्। इह तु तथा मा भूदिति हि यत्नः।

**उञ्छयति। मा भवानुञ्चिच्छत्॥**

अयं तुदादौ पठिष्यते। स पाठ उञ्छती इति शीनद्योर्नुम्विकल्पार्थोऽवश्याभ्युपगन्तव्य इतीह पाठः किमर्थ इति चेत्—स्वरार्थः। उञ्छति इत्यत्र शपि 'अनुदात्तौ सुप्पितौ' इति शप्तिपोरनुदात्तत्वेन 'धातोः' धातोरन्त उदात्तः इत्युकारस्योदात्तत्वे 'उदात्तादनुदात्तस्य स्वरितः' इति शबकारस्य स्वरितत्वे 'स्वरितात्संहितायामनुदात्तानाम्' इति तिविकारस्य प्रचयत्वे त्रयोऽचः क्रमेणोदात्तस्वरितप्रचया भवन्ति। शे तु 'आद्युदात्तश्च' इति प्रत्ययादित्वेनाकारस्योदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' यत्र पदे भविष्यति उदात्तः स्वरितो वा विधीयते तत्र तं वर्जयित्वाऽन्यदनुदात्तमिति धातोरप्यनुदात्तत्वे, पूर्ववत्तिपः स्वरितत्वे अचोनुदात्तोदात्तस्वरिता भवन्तीति। विपर्ययः कस्मान्न भवति धातोरन्तोदात्तत्वे शस्यानुदात्तत्वमिति यतोऽयं स्वरभेदो न स्यात्। नैतदस्ति—'सति शिष्टस्वरो बलीयान्' इति यस्मिन् सति यश्शि-

प्यते स बलीयानित्यर्थः । ननु 'अन्यत्र विकरणेभ्यः' इत्यपि तत्र पठ्यते । नायं पर्युदासो धातुस्वरविषयः किन्तु लसार्वधातुकस्वरविषयः । लादेशस्य सार्वधातुकस्य प्रत्ययाद्युदात्तत्वं सति शिष्टेऽपि विकरणस्वरो न बाधते इति । अस्य च ज्ञापकं तादृशमेव । तथा हि—'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्हिङोः' इति तासेः परस्य लसार्वधातुकस्य सति शिष्टस्वरेण नुदात्तत्वेऽपि सिद्धे पुनर्विधानाज्ज्ञायते 'अन्यत्र विकरणेभ्यः' इति । तच्च लसार्वधातुकविषयम् ॥

उच्छी विवासे ॥ ११७ ॥

समाप्तिर्विवास इति तरङ्गिण्याम् । विपूर्वश्चायं प्रायः प्रयुज्यत इति पुरुषकारे । व्युच्छति व्युच्छाञ्चकार । व्युच्छिता, इत्यादि ॥ आम्विधावागमनिमित्ताऽपि गुरुमत्ता गृह्यते । अत एव 'अनृच्छः' इति प्रतिषेधः ॥

उचिच्छिषति—अत्र द्विर्वचने तुकश्चुत्वस्य पूर्वत्रासिद्धत्वात् हलादिशेषेण तकारस्य शेषे प्राप्ते 'खर्पूर्वाः खय इति वक्तव्यम्' 'शर्पूर्वाः खयः' इत्यत्र शर्ग्रहणमपनीय खर्ग्रहणं कर्तव्यमित्यर्थः । तेन खर्पूर्वाः खयश्शिष्यन्ते अन्ये निवर्तन्त इति तकारस्य निवृत्तौ छकारस्य 'अभ्यासे चर्च' इति चर्त्वे रूपम् । अभ्यासचर्त्वस्य तुक्यसिद्धत्वादुकारस्य पुनस्तुक् न भवति, 'अभ्यासजश्त्वचर्त्वमेत्वतुकोस्सिद्धं वक्तव्यम्' इति चर्त्वस्य सिद्धत्वात् । अत्र 'पूर्वत्रासिद्धीयमद्विर्वचने' इति अनाश्रित्योक्तं 'खर्पूर्वायाः खयः' इति । यदाहुर्हरदत्तादयः—यदाश्रयेण हि श्चुत्वस्य द्विर्वचने सिद्धत्वाद्धलादिशेषेण छस्य निवृत्ताविष्टसिद्धेः ॥

व्युष्टः, व्युष्टवान्— ‘ श्वीदितो निष्ठायाम् ’ इतीडभाव : ।।

व्युष्टे दीयते कार्यं वा वैयुष्टम्—‘ व्युष्टादिभ्योऽण् ’ इति तत्र च दीयते कार्यमिति विषयेऽण्प्रत्ययः ‘ नय्वाभ्याम् ’ इति ऐच वृद्धेरभावश्च । अयमपि तुदादौ पठिष्यते । पूर्ववदुभयत्र पाठे प्रयोजनम् ।।

**ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ ।। २१८–२२३ ।।**

ध्रजति । दध्राज । ध्रजिता, इत्यादि ।।

अध्रजीत् , अध्राजीत्—‘ अतो हलादेः ’ इति वा वृद्धिः ।

दिध्रजिषति ।। दाध्रज्यते दाध्रजीति, दाध्रक्ति । ‘ चोः कुः ’ झलि पदान्ते च ‘ खरि च ’ इति चर्त्वम् ।।

ध्राजयति ।। अदिध्रजत् ।।

ध्रञ्जति । दध्रञ्ज । ध्रञ्जिता इत्यादि ।।

दिध्रञ्जिषति । दाध्रञ्ज्यते । दाध्रञ्जीति, दाध्रङ्क्ति । लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च— अदध्रन् ।।

धर्जति । दधर्ज । धर्जिता इत्यादि ।

दिधर्जिषति । दरीधृज्यते । ‘ रीगृदुपधस्य च ’ इति रीक् ।।

दर्धृजीति, दरिधृजीति, दरीधृजीति, । दर्धर्क्ति दरिधर्क्ति, दरीधर्क्ति । ‘ रुग्रिकौ च लुकि ’ इति रुग्रिग्रीकः । ‘ नाभ्यस्तस्याचि ’ इति पक्षे न गुणः । एवं तसादौ—दर्धक्त इत्याद्युदाहार्यम् ।।

धर्जयति । अदधर्जत्, अदीधृजत् । उरृद्वा ॥

धर्जित्वा — 'न क्त्वा सेट्' इत्यकित्त्वाद्गुणः ॥

धृज्यम्— 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यप् ॥

धर्जः— 'चजोः कु घिण्यतोः निष्ठायामनिटः' इति वार्तिकसूत्रेण कुत्वम् ॥

धृञ्जति । दधृञ्ज धृञ्जिता इत्यादि ॥

दिधृञ्जिषति, । दरीधृञ्ज्यते । पूर्ववद्रीक् ॥

दाधृञ्जीति, दाधृङ्क्ति, इत्यादि धृजिवत् । लङि तिप्सिपोर्हल्ङ्यादिसंयोगान्तलोपयोः—अदाधृन् । संयोगान्तलोपस्यासिद्धत्वात् अलघूपधत्वात् प्रत्ययलक्षणेन न गुणः ॥

धृञ्जयति । अदधृञ्जत् ॥

ध्वजति । ध्वञ्जति, इत्यादि ध्रजध्रजिवत् । तरङ्गिणीकाश्यपसम्मतासु आद्यौ व्रजव्रजी इति, दन्त्योष्ठ्यादी पठ्येते । अन्यत्र सर्वत्र नवर्गीयादी एव ॥

कूज अव्यक्ते शब्दे ॥२२४॥

कूजति । चुकूज । कूजिता ॥

चुकूजिषति । चोकूज्यते । चोकूजीति, चोकूक्ति ॥

कूजयति । अचुकूजत् ॥

कूजः । कूज्यम्—'न कादेः' इति निष्ठायां सेट्त्वात्कुत्वाभावः ॥

अर्ज षर्ज अर्जने ॥ २२५–२२६ ॥

अर्जति । आनर्ज । अर्जिता, इत्यादि ॥

अर्जिजिषति ॥ अर्जयति । आर्जिजत् ॥

स्वर्गः—वार्तिककारमते न्यङ्क्वादित्वात् कुत्वम् ॥

ऋजुः—'अर्जिदृशि' इत्यादिना कुप्रत्ययः ऋजादेशश्च ॥

अर्ज प्रयत्ने इति चुरादौ ॥

सर्जति । ससर्ज । सर्जिता ॥

सिसर्जिषति—'स्तौतिण्योरेव' इति नियमान्न षत्वम् ॥

सासर्ज्यते ॥ सासर्क्ति, इत्यादि ॥

सर्जयति । अससर्जत् ॥ सिसर्जयिषति ॥

**गर्ज शब्दे ॥ २२७ ॥**

गर्जति, इत्यादि ॥

**तर्ज भर्त्सने ॥ २२७ ॥**

तर्जति । ततर्ज, इत्यादि ॥

अयं चुरादावपि ॥

**कर्ज व्यथने ॥ २२९ ॥**

**खर्ज पूजने च ॥ २३० ॥**

कर्जति । चकर्ज । कर्जिता ॥

खर्जति, इत्यादि ॥

खर्जूरः—'खर्जपिञ्जादिभ्य ऊरोलचौ' इत्यूरः ॥

**अज गतिक्षेपणयोः ॥ २३१ ॥**

अजति अजतः अजन्ति ॥ विवाय । विव्यतुः । विव्युः वियिथ, विवेथ । विव्यथुः । विव्य । विवाय, विवय । विव्यिव । 'अजेर्व्यघञपोः' घञपोरन्यस्मिन्नार्धधातुके विषयभूते विभाव इति विभावे द्विर्वचने 'एरनेकाचोऽसंयोगपूर्वस्य' धातोरवयवः संयोगो यस्मादिवर्णात्पूर्वो नास्ति तदन्तस्यानेकाचोऽङ्गस्याजादौ यणिति यण् । अत्र वकारस्य हल्परत्वात् 'उपधायां च' इति दीर्घः 'अचः परस्मिन्' इति यणः स्थानिवत्त्वात् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति असिद्धत्वाद्वा न भवति । वृद्धिगुणयोर्विषये परत्वात्तौ भवतः 'णलुत्तमो वा' इति उत्तमे णित्त्वविकल्पनात् पक्षे गुणः । वलादौ क्रादिनियमादिट् । विभावो ह्यनुदात्तत्वात् अनिट्, थलि तु 'अचस्तास्वत्थल्यनिटो नित्यम्' अजन्तो यो धातुस्तासौ नित्यमनिट् तस्य तासाविव थलीण्निषेधे प्राप्ते 'ऋतो भारद्वाजस्य' योऽयं तासौ नित्यानिटस्थलीण्निषेधः स भारद्वाजस्य मतेन ऋकारान्तस्यैवेति नियमादन्यत्रार्थाद्विकल्प इतीडागमः पाक्षिकः । अजेरुदात्तत्वस्य इडर्थत्वात् तत्सामर्थ्यात् वलादावार्धधातुके अयमादेशो विकल्पित इति पक्षे व्यादेशाभावात् आजिथ इत्यपि भवति । तथा वमयोरपि आजिव, आजिम, इति । उक्तं च वृत्तौ—'वलादावार्धधातुके विकल्प इष्यते' इति । अत्र केचिद्वमयोर्वलादित्वस्य क्रादिनियमेनेटः पर्यवसानान्न कदाचिदपि वलाद्यार्धधातुकाभिव्यक्तिरिति न तत्रायमादेशविकल्पः । थलि तु भवत्येव यतस्तत्रेड्विकल्प इति । ननु विव्यतुः इत्यादौ द्विर्वचनात्पूर्वं परत्वादियङि 'द्विर्वचनेऽचि' इति तस्य द्विर्वचने कर्तव्ये स्थानिवत्त्वादुत्तरखण्डे जग्मतुरित्यादिवत् आदेशरूपमेवावतिष्ठतेति कुतो यणः प्रसङ्गः । उच्यते—द्विर्वचनार्थमियङि निवृत्ते पुनरयमिच्छताऽवश्यं प्रवर्तयितव्यः तत्र दशायां 'असिद्धवदत्र' इतीयङो असिद्धत्वादङ्गस्यानेकाच्त्वादपवादत्वेन वा यणेव भविष्यतीति इटकिट, इत्यत्र अयमर्थः प्रपञ्चयिष्यते ॥

अजिता, वेता ।। अजिष्यति, वेष्यति । अजतु । आजत् । आशिषि—वीयात् । वलाद्यार्धधातुकत्वान्नित्यं वीभावः ।।

आजीत्, अवैषीत् । आजिष्यत्, अवेष्यत् ॥

अजिजिषति, विवीषति । 'इको झल्' इति कित्त्वान्न गुणः ॥

'आर्धधातुके' इत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तौ वीभावे हलादित्वाद्यङि—वेवीयते । नात्र यङ्लुगस्ति यतो लुका यङार्धधातुकस्य विषयत्वापहारान्नार्धधातुकाभिव्यक्तिरिति वीभावस्य नैव प्रसङ्गः, उक्तं चैवं 'न लुमताङ्गस्य' इत्यत्र कैयटे—न लुमता यस्मिन्निति चेत् हनिणिङादेशा न सिद्ध्यन्तीति भाष्यवार्तिकयोरुक्तेः 'लुङि च' इत्यादौ विषयसप्तम्याश्रयणेनादेशाः सेत्स्यन्तीत्याशङ्क्य लुका लुङो विषयत्वापहाराद्विषयसप्तम्याश्रयणेऽप्यसिद्धिरिति ॥

वाययति । अवीवियत् ॥

कर्मादौ वीयते इत्यादि । स्यादिषु 'स्यसिच्सीयुट्तासिषु वा चिण्वदिट्' इति वृद्ध्याययोः—वायिष्यते । अवायिष्यत । अवायिष्यथ । अवायिष्यताम् । वायिषीष्ट । अवायिष्ट, इत्यादि । चिण्वदिटोऽभावे—वेष्यते । अवेष्यत । अवेष्ट । वेषीष्ट । वेता, इत्यादि । अत्र पक्षे वलाद्यार्धधातुकसद्भावात्पक्षे व्यादेशाभावे—अजिष्यते । आजिष्यत । आजिषाताम् । आजिषीष्ट । अजिता, इत्यादि इति त्रैरूप्यम् । लिटि ध्वमि चिण्वत्पक्षे वृद्ध्यायादेशयोः 'विभाषेटः' इति मूर्धन्यो विकल्पेन, अन्यदा तु 'इणष्षीध्वम्' इति नित्यो व्यादेशाभावश्चेति चातूरूप्यम्—वायिषीध्वम् । वयिषीढ्वम् । वेषीढ्वम् ।

अजिषीध्वम्, इति। लुङि तु 'धिच' इति सिचो लोपे चिण्वदिटि व्यादेशस्य वृद्ध्याययोः मूर्धन्यस्य पूर्ववद्विकल्पः। अचिण्वत्पक्षे तु नित्यः। आदेशाभावे च सिज्लोपे इटाङ्गमिणन्तमिति नित्ये मूर्धन्ये—अवायिध्वम्, अवायिढ्वम्, अवेढ्वम्, आजिढ्वम्, इति चातूरूप्यम्। येषां तु दर्शनं 'इणष्षीध्वम्' इत्यत्र इण्ग्रहणेनेटो न ग्रहणमिति तेषां मूर्धन्याभावात् लिङ्वदेव रूपाणि। कर्मकर्तरि तशब्दे 'अचः कर्मकर्तरि' इति चिणो विकल्पनात्पक्षे सिचि चिण्वदिटि च अवायि, अवेष्ट, अवायिष्ट, इति त्रैरूप्यम्। अन्यत्सर्वं कर्मवत्। सम्भवति च क्षेपणार्थस्य कर्मकर्ता॥

प्रवयणम्, प्राजनम्—'वा यौ' इति वीभावविकल्पः, 'कृत्यचः' इति वीभावे णत्वम्॥

समजः पशूनां संघ इत्यर्थः, उदजः तेषामेव प्रेरणम्। 'समुदोरजः पशुषु' इत्यप्। धात्वर्थस्यापशुविषयत्वे—समाजः उदाजः इति घञेव। 'अघञपोः' इति पर्युदासान्न वीभावः। 'अजिव्रज्योश्च' इति अकुत्वम्॥

समज्या—'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' इति स्त्रियां भावादौ क्यप्। 'प्रतिषेधे क्यप उपसङ्ख्यानम्' इति वीभावनिषेधः॥

प्रवेयम्—'आर्धधातुके' इत्यस्य विषयसप्तमीत्वात् प्रागेव वीभावे 'अचो यत्'; अन्यथा ण्यति वृद्धौ प्रवैयं* इति स्यात्॥

वातमजा मृगाः—खश्प्रकरणे 'वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसङ्ख्यानम्' इति खश्। अस्य शित्त्वेन सार्वधातुकत्वान्न वीभावः॥

---

* प्रवाय्यं.

अजिरम्—'अजिरशिशिर' इति निपातितः ॥

वेणुः—'अजिवृरीभ्यो नित्'* इति णुः ॥

वेणुकीयम्—'नडादीनां कुक्च' इति चातुरर्थिकश्छः कुगागमश्च ॥

आजिः—'अज्यतिभ्यां च' इतीणि वृद्धिः 'पादस्य पदाज्याति' इति निर्देशान्न वीभावः ॥

अजः अजा—अच्, अजादिपाठाट्टाप्। अत एव वीभावाभावः ॥

अजानां समूहः आजिकम्—'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्' इति वुञ् ॥

**तेज पालने ॥ २३२ ॥**

तेजति। तितेज। तेजिता इत्यादि ॥

तेजः—'असुन्' इति असुन्नन्तः ॥

क्षमार्थोऽप्ये। तिज निशाने इति चुरादौ ॥

**खज मन्थे ॥ २३३ ॥**

खजति। चखाज। खजिता इत्यादि ॥

अखजीत्, अखाजीत्—'अतो हलादेः' इति वा वृद्धिः ॥

---

* अजिवृरीभ्यो णुः-

खजाको मन्थः—'खजेराकः' इत्याकः ॥

अत्र केचित् 'कज मदे' इत्यपि पठन्ति ॥

**खजि गतिवैकल्ये ॥ २३४ ॥**

खञ्जति । चखञ्ज । खञ्जिता इत्यादि । इदित्त्वान्नलोपाभावः ॥

**एजृ कम्पने ॥ २३५ ॥**

एजति । एजांचकार । एजिता ॥

एजिजिषति ॥ एजयति । मा भवानेजिजत् । ऋदित्त्वान्नोपधाह्रस्वः । एजते इति दीप्तौ गतः ॥

**टु ओ स्फूर्जा वज्रनिर्घोषे ॥ २३६ ॥**

टु शब्दस्य 'आदिर्ञिटुडवः' इतीत्त्वे लोपः । प्रयोजनं 'ट्वितोऽथुच्' इत्यथुचि स्फूर्जथुः इति । ओकारः 'ओदितश्च' इति निष्ठानत्वार्थः—स्फूर्णः स्फूर्णवानिति । 'आदितश्च' इत्यनिट्त्वम् । ननु निष्ठानत्वार्थादोदित्करणसामर्थ्यादेवानिट्त्वं सिद्धम् । एवं तर्हि 'विभाषा भावादिकर्मणोः' इति इड्विकल्पार्थमादित्त्वं—स्फूर्णमनेन, स्फूर्जितमनेन इत्यादि ॥

स्फूर्जति । पुस्फूर्ज । स्फूर्जिता ॥

पुस्फूर्जिषति । पोस्फूर्ज्यते । पोस्फूक्ति । अपोस्फूर्क् ॥

स्फूर्जयति । अपुस्फूर्जत् । अस्य दीर्घोपदेशेन 'उपधायां च' इति दीर्घस्य अनित्यत्वज्ञापनात् मुर्छति हुर्छति स्फुर्झतीत्यपि

भवतीति केचिदिति मैत्रेये प्रतिपादितम् ।।

**क्षि क्षये ।। २३७ ।।**

'अनिट्स्वरान्तः' इत्ययमनिट् । इह पाठस्तु उत्तरधातुसाम्यादिति मैत्रेये प्रतिपादितम् । क्षयति । चिक्षाय । चिक्षियतुः । चिक्षेथ, चिक्षयिथ । चिक्षियिव । क्रादिनियमादिट् । थलि 'अचस्तास्वत्' इति निषेधात् भारद्वाजनियमाच्च विकल्पितः । अजादौ 'अचि श्नुधातु' इत्यादिना इयङ्, 'एरनेकाचः' इति यण्तु संयोगपूर्वत्वान्न भवति । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् । आशिषि—क्षीयात् 'अकृत्सार्वधातुकयोः' इति दीर्घः । अक्षैसीत् सिचि वृद्धिः ।।

कर्मादौ क्षीयते इत्यादि वीवत् । अन्तर्भावितण्यर्थोऽयं सकर्मकः, 'न क्षीयते इत्यक्षरं' इति भाष्ये दर्शनात् ।।

चिक्षीषति—'अज्झनगमां सनि' इति झलादौ सनि दीर्घः ।।

चेक्षीयते । चेक्षयीति । 'सार्वधातुकार्धधातुकयोः' इति गुणः । 'नाभ्यस्तस्य' इति निषेधो लघूपधगुणस्य ।।

क्षीणः, क्षीणवान्, क्षीणमिदम्—अस्य ध्रौव्यार्थत्वात् 'क्तोऽधिकरणे च' इत्यधिकरणे क्तः । 'अधिकरणवाचिनश्च' इति तद्योगे कर्तरि षष्ठी, 'निष्ठायामण्यदर्थे' इति क्षियो दीर्घः, ण्यदर्थौ भावकर्मणी । 'क्षियो दीर्घात्' इति निष्ठानत्वम् । ण्यदर्थे तु क्षितमनेन, क्षितोऽयमनेन, क्षीणः तपस्वी, क्षीणो जाल्मः, क्षितः इति वा । 'वाक्रोशदैन्ययोः' इति क्षियो निष्ठायां वा दीर्घः । पूर्ववद्दीर्घपक्षे नत्वम् ।।

क्षेतुं शक्यः क्षय्यः—'क्षय्यजय्यौ शक्यार्थे' इति निपातनादयादेशो यति ।।

प्रक्षीय—' क्षियः ' इति ल्यपि दीर्घः ॥

क्षि निवासगत्योः इति तुदादौ । क्षीष् हिंसायामिति क्र्यादौ । क्षिणु हिंसायाम् , इति तनादौ ॥

**क्षीज अव्यक्ते शब्दे ॥ २३८ ॥**

क्षीजति । चिक्षीज । क्षीजिता ॥

चिक्षीजिषति ॥ चेक्षिज्यते । चेक्षीक्ति ॥

क्षीजयति । अचिक्षिजत् । ' णौ चङि ' इति ह्रस्वः ॥

कूजिना सहायं न पठितः, अप्रसिद्धत्वात् ॥

**लज लजि भर्जने ॥ २३९-२४० ॥**

**लाज लाजि भर्त्सने च ॥ २४१-२४२ ॥**

चकारो भिन्नक्रमः । एतावपि भर्त्सने इति मैत्रेयः । भर्त्सनग्रहणं भर्जनस्याप्युपलक्षणमिति पुरुषकारे । लजति । ललाज । लेजतुः । लजिता । अलजीत् , अलाजीत्—' अतो हलादेः ' इति वा वृद्धिः ॥

लिलजिषति ॥ लालज्यते ॥ लालक्ति ॥

लाजयति । अलीलजत् ॥

लञ्जति । ललञ्ज । लञ्जिता ॥

लिलञ्जिषति ॥ लालञ्जयते । इदित्वान्नलोपाभावः ॥ लालङ्क्ति । लाजः ॥ लञ्जयति । अललञ्जत् । एवं लाजति लाञ्जतीत्यादि ॥

ओ लजी ओ लस्जी व्रीडने इति तुदादौ । लज प्रकाशने इति

कथादौ । लजि इति दटपुटादिदण्डके भाषार्थः ।।

## जज जजि युद्धे ।। २४३-२४४ ।।

जजति । लजिवत् ।।

जङ्गलम्—बाहुलकात् कलप्रत्ययः कुत्वं च ।।

कुरुजङ्गलेषु भवं कौरुजाङ्गलम्, कौरुजङ्गलम्—'तत्र भवः' इत्यणि 'जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्' इति पूर्वपदस्य नित्या वृद्धिः, उत्तरपदस्य तु वा ।।

## तुज हिंसायाम् ।। २४५ ।।

तोजति । तुतोज । तोजिता ।।

तुतोजिषति, तुतुजिषति ।। तुजित्वा, तोजित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः ।।

तोतुज्यते ।। तोतोक्ति ।।

तोजयति । अतूतुजत् ।।

भावादिकर्मणोः 'उदुपधात्' इति कित्त्वविकल्पनात्—तुजितमनेन, तोजितमनेन, इत्यादि ।

## तुजि पालने च ।। २४६ ।।

तुञ्जति । तुतुञ्ज । तुञ्जिता ।।

तुतुञ्जिषति ।। तोतुञ्ज्यते ।। तोतुङ्क्ति । अतोतुङ् ।।

तुञ्जयति । अतुतुञ्जत् ।।

तुङ्ग —वार्तिकमते न्यङ्क्वादित्वात्कुत्वम् ।।

भाषार्थोऽयं युजादौ ॥

## गज गजि गृज गृजि मुज मुजि शब्दार्थाः ॥ २४७-२५२ ॥

गजति ॥ गञ्जति, इत्यादि । लजलजिवत् ॥

जगजतुः इत्यादौ आदेशादित्वान्नेत्त्वाभ्यासलोपौ ॥

गजः—अच् ॥

गञ्जा मदिरागृहम् ॥

गर्जति । जगर्ज । गर्जिता ॥

जिगर्जिषति ॥ जरीगृज्यते । जर्गृजीति इत्यादि पूर्ववत् ॥

गर्जयति । अजगर्जत्, अजीगृजत्—'उरृत्' वा ॥

गृञ्जति । जगृञ्ज । गृञ्जिता ॥

जिगृञ्जिषति ॥ जरीगृञ्ज्यते—'रीगृत्वतः' इति रीक् । जरीगृञ्जीति इत्यादि ॥

मोजति ॥ मुञ्जति इत्यादि तुजिवत् ॥

मृज मृजीति स्वामिचन्द्रौ ॥

## गज मदने च ॥ २५३ ॥

अयं चुरादावपि शब्दार्थः । गर्ज शब्दे इत्यग्रे ॥

## वज व्रज गतौ ॥ २५४-२५५ ॥

वजति ॥ ववाज । ववजतुः ॥ वजिता इत्यादि । 'न शसददवादिगुणानां' इत्येत्वाभ्यासलोपनिषेधः ॥

अवजीत् अवाजीत्—'अतो हलादेः' इति वा वृद्धिः ॥

वाजः । वाज्यम्—घञ्ण्यतौ, 'अजिव्रज्योश्च' इति चकारेण कुत्वनिषेधः ॥

व्रजति, इत्यादि ।। लुङि 'वदव्रज' इति नित्या वृद्धिः—अव्राजीत् इति ।।

व्रज्या—'व्रजयजोर्भावे क्यप्' इति क्यप् ।।

व्रजः—'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च' इति अधिकरणे घान्तो निपातितः ।।

परिव्राट्—'परौ व्रजेष्षः पदान्ते' इति क्विपि षत्वं दीर्घश्च ।।

एतौ चुरादावपि । शुचादयः उदात्ता उदात्तेतः क्षिवर्जम् ।।

अथ क्रमेण प्राप्तानात्मनेपदिनष्टवर्गीयान्तानाह—

**अट्ट अतिक्रमहिंसयोः ।। २५६ ।।**

इतः शाठ्यन्ता उदात्ता अनुदात्तेतः ।।

दोपधोऽयं स्मर्यत इति मैत्रेयः । तोपधोऽयमिति 'ष्टुना ष्टुः' इत्यत्र न्यासवृत्तिप्रदीपकारादयः । स्वाम्यपि क्विपि अदिति तकारश्रवणार्थं तोपधत्वमुक्त्वा दोपधत्वमप्याह । मैत्रेयस्तु स्वमतं दोपधत्वमुक्त्वा तोपधत्वं मतान्तरमाह । अड्ड इति डान्तपाठः प्रकरणविरोधादुपेक्ष्यः ।।

अट्टते । आनट्टे । अट्टिता । अट्टिष्यते । अट्टताम् । आट्टत । अट्टेत । आशिषि—अट्टिषीष्ट । मा भवानट्टिष्ट । आट्टिष्यत । ष्टुत्वं सर्वत्र । दोपधत्वे चर्त्वं च । अटिट्टिषते 'पूर्वत्रासिद्धीयमद्विर्वचने' इति ष्टुत्वस्यासिद्धत्वाभावात् द्विटकारस्य सनन्तस्य द्विर्वचने हलादिशेषे रूपम् । यदाऽपि प्राणिणिषति इत्यादौ णत्वे कृते तस्यासिद्धत्वाभावात्सणत्वस्य द्विर्वचनेनैवेष्टसिद्धौ 'उभौ साभ्यासस्य' इति पुनर्णत्वविधानात् 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यत्वज्ञापनात् ष्टुत्वस्यासिद्धत्वात् तकारादेः द्विर्वचनं तदापि 'खर्पूर्वाः खयः' इति टकार-

स्यैव शेषादिदमेव रूपम् । एवं च पुरुषकारादिषु अतिट्टिषते इति तकारस्य शेषेणोदाहरणप्रदर्शनं चिन्त्यम् । दोपधत्वे तु 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्य द्विर्वचनविषयत्वात् 'न न्द्राः' इति द्विर्वचननिषेधे प्रवृत्त्यभावात् ष्टुत्वस्यासिद्धत्वात् दकारवर्जं द्विरुच्यते । दकारस्य पुनष्टुत्वे चर्त्वे च अट्टिटिषते इति भाव्यम् ।।

अट्टयति । आटिट्टत् । दोपधत्वे तु आट्टिटत् ।।

अट्टा—'गुरोश्च' इत्यकारः ।।

अट्टां करोति अट्टायते—'अटाट्या'? इत्यादिना क्यङ् ।। अयमनादरे चुरादिः ।।

**वेष्ट वेष्टने ।। २५७ ।।**

वेष्टते विवेष्टे ।। वेष्टिता ।।

विवेष्टिषते ।। वेवेष्ट्यते ।। वेवेष्टीति. वेवेष्टि । वेवेष्टः ।। लङि—अवेवेट् ।। वेष्टयति ।। अविवेष्टत्, अववेष्टत्—'विभाषा वेष्टिचेष्ट्योः' इति चङ्परे णावभ्यासस्य पक्षे अकारः ।।

कर्मादौ वेष्ट्यते इत्यादि ।।

**चेष्ट चेष्टायाम् ।। २५८ ।।**

वेष्टिवत् । अकर्मकस्त्वयम् ।।

**गोष्ट लोष्ट संघाते ।। २५९-२६० ।।**

गोष्टते । जुगोष्टे । गोष्टिता ।।

लोष्टते । लुलोष्टे । लोष्टिता इत्यादि । वेष्टिवत् ।।

घट्ट चलने ॥ २६१ ॥

घट्टते । जघट्टे । घट्टिता । इत्यादि ॥

अयं चुरादावपि ॥

स्फुट विकसने ॥ २६२ ॥

स्फोटते । पुस्फोटे । स्फोटिता । इत्यादि ॥

पुस्फुटिषते पुस्फोटिषते ॥ स्फुटित्वा, स्फोटित्वा— 'रलो व्युपधात्' इति कित्त्वविकल्पः ॥

पोस्फुट्यते ॥ पोस्फुटीति, पोस्फोट्टि । अपोस्फोट् ॥

स्फोटयति । अपुस्फुटत् ॥

अयं तुदादावपि । विशरणार्थोऽग्रे परस्मैपदिषु । भेदनार्थश्चुरादौ ॥

अठि गतौ ॥ २६३ ॥

अण्ठते । आनण्ठे । अण्ठिता ॥

अण्टिठिषते ॥ अण्ठयति । आण्टिठत् । 'न न्द्राः' इति नवर्जं द्विरुच्यते ॥

वठि एकचर्यायाम् ॥ २६४ ॥

एकचर्या सहायगमनम् । वण्ठते । ववण्ठे । वण्ठिता ॥

विवण्ठिषते ॥ वावण्ठ्यते ॥ वावण्ठीति, वावण्ठि । तिपष्टुत्वे चर्त्वम् । लोटि हेर्धित्वे ष्टुत्वे जश्त्वे वावण्ढि । लङि— अवावन् ॥

वण्ठयति । अववण्ठत् ॥

अयमनिदित् स्थौल्यार्थः परस्मैपदिषु ॥

मठि कठि शोके ॥ २६५–२६६ ॥

इह शोक आध्यानम् । मातुर्मण्ठते उत्कण्ठत इत्यर्थः । 'अधीगर्थ' इति कर्मणि शेषे षष्ठी ॥

मठ मदनिवासयोः । कठ कृच्छ्रजीवने इत्यग्रे परस्मैपदिषु अनिदितौ । काठि शोके इतीदित् चुरादौ ॥

मुठि पालने ॥ २६७ ॥

मुण्ठते इत्यादि ॥

हेठ विबाधायाम् ॥ २६८ ॥

अमुं परस्मैपदिष्वपि केचित्पठन्ति । विबाधनं शाठ्यम् । हेठते । जिहेठे । हेठिता । इत्यादि ॥

हेठयति । अजीहिठत्, अजिहेठत्—' काण्यादीनां वा ' इति णौ चङ्युपधाया ह्रस्वविकल्प :—

काणे राणेस्तथा श्राणेर्भाणेर्हेठेर्लुठेरपि ।
ण्यन्तस्य भाष्यकारेण काण्यादित्वं प्रदर्शितम् ॥

बोधिन्यासकृता लोठिर्लोटिर्वाणिश्च भाविना ।
सहिताः पूर्वमुक्ताश्च काण्यादौ परिकीर्तिताः ॥

दुर्गश्चार्णिं च काण्यादिं मन्यते शाकटायनः ।
लोपिं तदेवमेतेऽत्र धातवो द्वादश स्मृताः ॥

एठ च । २६९ ।।

विपूर्वोऽयमिति स्वामिकाश्यपौ । मैत्रेयादयस्तु केवलमेवोदाजह्रुः । एठते । एठांचक्रे । एठिता ।

एटिठिषते ।। एठयति । मा भवानिटिठत् । द्विर्वचनात्पूर्व-मुपधाह्रस्व इत्युक्तम् ।।

हिडि गत्यनादरयोः ।। २७० ।।

हिण्डते । जिहिण्डे । हिण्डिता ।।

जिहिण्डिषते ।। जेहिण्ड्यते ।। जेहिण्डि ।। आजेहिन् ।।

हिण्डयति ।। अजिहिण्डत् ।।

हुडि संघाते ।। २७१ ।।

हुण्डते । जुहुण्डे । हुण्डिता । इत्यादि पूर्ववत् । अत्र काश्यपः—आर्यास्तु न पठन्ति, द्राविडास्तु तं पठन्तीति । भाष्यादौ तु हुण्डेत्यविगीतमुदाह्रियते ।।

कुडि दाहे ।।२७२ ।।

कुण्डते इत्यादि ।।

कुण्डः । कुण्डम्— अच् ।।

स्त्रियां—कुण्डी — ' जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबरात् वृत्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ' इति अमत्रे ङीष् । अन्यत्र कुण्डा । वैकल्यार्थोऽत्रैव पठिष्यते । रक्षणार्थश्चुरादौ ।।

वडि विभाजने ।। २७३ ।।

मडि च ।। २७४ ।।

अत्र स्वामी—वडि विभाजने, मडि च इति पृथक्सूत्रणादर्थान्तरेऽपि । नन्दी तु वडि विभाजने, मडि वेष्टने इति भङ्क्त्वा पठतीति । वण्डते । ववण्डे । वण्डिता ।। मण्डते । ममण्डे । मण्डिता । इत्यादि ।।

मण्डूकः—' शलिमण्डिभ्यामूकण् ' इत्यूकण् ।।

कूपमण्डूकः, उदपानमण्डूकः, कच्छमण्डूकः—' पात्रे समितादयश्च' इति क्षेपे सप्तमीतत्पुरुषः । क्षेपश्च ' कूपे मण्डूक इव ' इत्यदृष्टविस्तारताद्यवगमात् । ' कृधमण्डार्थेभ्यश्च ' इति युज्विधौ भूषणार्थ एव वृत्तौ उदाहृतः, तस्य 'अनुदात्तेतः' इति युचस्सिद्धत्वात् न त्वस्य युज्नेति ॥

मडि भूषायामित्यग्रे परस्मैपदिषु । णौ हर्षे च ॥

भडि परिभाषणे ।। १७५ ।।

परिहास इति देवः ; परितो भाषणं परिभाषणं इति स्वामी ॥

यस्सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् ।

इति निघण्टुः । भण्डते इत्यादि ।।

भण्डिलो दूतः—' सलिकल्यनिमहिभण्डि ' इत्यादिना इलच् ।।

कल्याणार्थश्चुरादौ ।।

पिडि सङ्घाते ।। २७६ ।।

पिण्डते इत्यादि ।।

पिण्डिलो गणकः । पूर्ववदिलच् । चुरादावप्ययम् ॥

मुडि मार्जने ॥ २७७ ॥

शुद्धिन्यग्भावौ मार्जनम् । मुण्डते इत्यादि ॥

खण्डनार्थः परस्मैपदिषु ॥

तुडि तोडने ॥ २७८ ॥

तोडनं दारणं हिंसनं च । तुण्डते इत्यादि ॥

तुण्डिः—'इन' इतीन्प्रत्ययः वृद्धनाभिः । साऽस्यास्तीति तुण्डिलः—'तुण्डादिभ्य इलच्च' इत्यत्र 'स्वाङ्गाद्वृद्धौ' इति गणसूत्रेण स्वाङ्गात् वृद्धौ वृत्तादस्माच्छब्दादिलच् ।

तुण्डिल एव तुण्डिभः—'तुण्डिवलिवटेर्भः' इति मत्वर्थीयो भः । तुण्डिलो बहुभाषी—'सलिकरयनि' इत्यादिना इलच् ॥

अयमनिदित्परस्मैपदिषु ॥

हुडि वरणे ॥ २७९ ॥

वरणं स्वीकारः । हरणमिति मैत्रेयः । हुण्डते । जुहुण्डे । हुण्डिता । इत्यादि ॥ स्फुडि विकसने इत्यत्रैके पठन्ति ॥

चडि कोपे ॥ २८० ॥

चण्डते । इत्यादि ॥

चण्डनः—'क्रुधमण्ड' इति वा 'अनुदात्तेतः' इति वा युच् ।

चण्डालः—'पतिचण्डिभ्यामालञ्' इत्यालञ् ॥

चण्डालस्यापत्यं चाण्डालकिः—अत इञि 'सुधातुरकङ्च' 'व्यासवरुडनिषादचण्डालबिम्बानाम्' इत्यकाञादेशोऽन्त्यस्य ॥

चण्डाली इति शार्ङ्गरवादित्वात् ङीनि ॥

'त क्षात् इति सूत्रेऽण्प्रकरणे 'कुलालवरुडकर्मारनिषाद-चण्डालमित्रामित्रेभ्यः छन्दस्युपसङ्ख्यानम्' इति उक्तत्वात् छान्दसः चाण्डालः

चण्डी—इनि 'कृदिकारादक्तिनः' इति ङीष् ॥

अयं चुरादौ ॥

शडि रुजायां संघाते च ॥ २८१ ॥

तालव्योष्मादिः । शण्डते इत्यादि ॥

शण्डः—असुरपुरोहितः

शण्डिलः—तीर्थमृषिश्च 'सलिकल्यनि' इत्यादिना इलच् ।

तडि ताडने ॥ २८२ ॥

तण्डते इत्यादि ॥

तण्ड : अच् ॥

वतण्डः—'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो :' इत्युपसर्ग-स्याल्लोपः ॥

वतण्डस्य गोत्रापत्यं वातण्ड्यः । वातण्डः । 'गर्गादिभ्यो यञ्' 'शिवादिभ्योऽण्' इति यञणौ । यदा त्विदमपत्यमाङ्गिरसं भवति तदा 'वतण्डाच्च' इति शिवाद्यणं बाधित्वा यञेव । अपत्ये तु स्त्रीलिङ्गेऽस्य 'लुक स्त्रियाम्' इति लुक् ॥

'शार्ङ्गरवाद्यञो ङीन्' इति ङीन्—वतण्डी । अनाङ्गिरसे तु

लुगभावात् वातण्ड्यायनी—'प्राचा ष्फ तद्धितः' इति यञन्तात् ष्फः, फस्यायनादेशः, पित्करणसामर्थ्यात् स्वार्थे ङीष् । ष्फप्रत्ययाभावे 'यञश्च' इति ङीपि 'यस्येति च' इत्यल्लोपे 'आपत्यस्य च तद्धितेऽनाति' आपत्ययकारस्यानाकारदौ भसंज्ञानिमित्ते तद्धिते ईति च परे लोप इति लोपे वातण्डी । 'अनाति' इति वचनात् वातण्ड्यायनी इत्यत्र यलोपो न भवति ॥

वितण्डा ॥

तण्डुलं—'लुठितटितडिभ्य उरुच' इत्युलच् ॥

**पडि गतौ ॥ २८३ ॥**

पण्डते ॥

पण्डितः । गोष्ठेपण्डितः—'पात्रेसमितादयश्च' इति क्षेपे सप्तमीतत्पुरुषः, तत्रैव पाठादलुक् । गोष्ठ एव पण्डितो न सदसि इति क्षेपावगतिः ॥

पण्डः—अच् । पणतेर्वा ञमन्ताड्डः ॥

पण्डस्यापत्यं पण्डारः—'आरगुदीचाम्' इत्यत्र रकाऽपि गोधार इति सिद्धे आरग्वचनादन्यत्रापि भवतीति वृत्तावुक्तम् ॥

नाशार्थश्चुरादौ ॥

**कडि मदे ॥ २८४ ॥**

कण्डते इत्यादि ॥

भेदने चुरादिः । अनिदिदिहैव, तुदादौ च परस्मैपदी ॥

**खडि मन्थे ॥ २८५ ॥**

खुडि इत्यप्येके पठन्ति । खण्डते ॥

खण्डः— अच् ॥

खडि भेदने चुरादिः ॥

हेडृ होडृ अनादरे ॥ २८६-२८७ ॥

हेडते । जिहेडे । हेडिता ॥

जिहेडिषते ॥ जेहेड्यते ॥ जेहेड्डि ॥

हेडयति । अजिहेडत् । ऋदित्त्वान्नोपधाह्रस्वः ॥

एवं होडते । जुहोडे । इत्यादि ॥

होडः—पचाद्यच् ॥

होड इवाचरति होडते 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विप्वा' इति क्विपि 'सनाद्यन्ताः' इति धातुत्वे लादयः । होडादीनामकारस्यानुदात्तत्वानुनासिकत्वयो : प्रतिज्ञानात् अनुदात्तङित : इति तङ् । तथा च भाष्यम्—सर्वप्रातिपदिकेभ्यः क्विप् इत्युक्त्वा न तर्हीदानीं गल्भाद्यनुक्रमणं कर्तव्यम् । कर्तव्यं च आत्मनेपदार्थाननुबन्धानासंक्ष्यामि इति । क्विब्भावे 'कर्तुः क्यङ् सलोपश्च' इति उपमानात्कर्तुः सुबन्तादाचारे क्यङिति क्यङ् । उपमानस्य कर्तृत्वं सन्निधानादाचरणक्रियापेक्षम् । सलोपश्च इति चशब्दस्य अन्वाचयशिष्टार्थत्वात् यत्रान्त्यः सकारस्सम्भवति तत्र लोपः । स च व्यवस्थितविभाषया । होडायते । अनुनासिकत्वप्रतिज्ञानं क्विप्सन्नियोगेनैवेतीत्संज्ञाया अभावात् 'अकृत्सार्वधातुकयोः' इति दीर्घः ॥

हेडृ वेष्टने इति घटादौ । हेडृ गतौ इत्यग्रे परस्मैपदी ॥

वाडृ आप्लाव्ये ॥ २८८ ॥

वशादिः । आप्लाव्यमाप्लवः । वाडते । अववाडत् इत्यादि ॥

द्राडृ ध्राडृ विशरणे ॥ २८९-२९० ॥

द्राडते । ध्राडते इत्यादि ।

शाडृ श्लाघायाम् ॥ २९१ ॥

शाडते इत्यादि लडयोरैक्यात् शालते इति काश्यपः । अत एव मैत्रेये रूपशाली शाला इत्युदाहृतम् । 'लस्य' इत्यत्र भाष्यकैयटयो : शाला इति श्यतेर्लप्रत्यये व्युदपादि ॥

शालीन : अधृष्टः—'शालीनकौपीने अधृष्टाकार्ययोः' इति खञि निपातितः ॥

गवां शाला गोशालं, गोशाला—'विभाषा सेनासुराच्छायाशालानिशानाम्' इति सेनाद्यन्तस्य तत्पुरुषस्य वा नपुंसकत्वम् ॥

गोशाले जातः गोशालः—'तत्र जातः' इत्यण् । 'स्थानान्तगोशालखरशालाच्च' इति लुक् । लिङ्गविशिष्टपरिभाषया गोशालाशब्दादप्यणो लुग्भवति । एवं खरशालः । वत्सशालायां जातः वत्सशालः, वात्सशालो वा—'वत्सशालाभिजिदश्वयुक्छतभिषजो वा' इति अणो वा लुक् ॥

शालिः—'इन्' इतीन् ॥

शालीनां भवनं क्षेत्रं शालेयम्—'व्रीहिशाल्योर्ढक्' इति ढक् ॥

अट्टादय उदात्ता अनुदात्तेतः ।

शौटृ गर्वे ॥ २१२ ॥

इतो गडद्यन्ता उदात्ता उदात्तेतः ॥

शौटति । शुशौट । शौटिता । शौटिष्यति । शौटतु । अशौटत् । आशीषि—शौट्यात् । अशौटीत् । अशौटिष्यत् ।।

शुशोटिषति ।। शोशोट्यते ।। शोशौट्टि । अभ्यासस्य ह्रस्वः । गुणः ।।

शौटयति ।। अशुशौटत् ।

शौटीरः—' कृगृशृपृकटिपटिशौटिभ्य ईरन् इतीरन् ।।

यौटृ बन्धे ।। २१३ ।।

यौटति इत्यदि ।।

म्रेटृ म्रेडृ म्लेटृ उन्मादे ।। २९४-२९६ ।।

द्वितीयस्तृतीयान्तः । तथा च ' तस्य परमाम्रेडितम् ' इति दृश्यते । तत्र न्यासे आम्रेड्यते आधिक्येनोच्यते इति । टान्तमध्ये पाठस्तु अर्थसाम्यान्नाथतिवत् । म्रेटति । म्रेडति । म्लेटति । इत्यादि ।।

कटे वर्षावरणयोः ।। २१७ ।।

अयमनेदिदग्रे । कटति । चकाट । कटिता इत्यादि ।।

अकटीत्—' अतो हलादेः ' इति वा वृद्धिः ' ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम् ' इति एदित्त्वात् निषिध्यते ।।

कटः—पचाद्यच् ।।

कटी—' कटाच्च श्रोणिवचने ' इति गौरादित्वात् ङीष् ।।

निकटे वसति नैकटिकः—' निकटे वसति ' इति सप्तम्यन्तात् वसत्यर्थे ठक् ।।

काटः लिङ्गम्—' हलश्च ' इत्यधिकरणे संज्ञायां घञ् ॥

कटीरः जघनं कन्तुकं च—' कृगृ ' इत्यादिना ईरन् ॥

कटित्रं चर्म—' अशित्रादिभ्यः ' इतीत्रः ॥

कटकम् :—' कुन् शिल्पिसंज्ञयोः ' इति कुन् ॥

कटुः—बाहुलकादुप्रत्ययः ॥

कट्वरः—' छित्वरछत्वरधीवरपीवरमीवरचीवरनीवरगह्वरकट्वरसयद्वराः ' इति वरचि निपात्यते ॥

चटे इत्येके इति काश्यपः । चटति इत्यादि पूर्ववत् ॥

चाटुः—' दृसनिजनिचटिरहिभ्यः उण् '* इत्युण् ॥

चटुः—बाहुलकादुकारः । संज्ञापूर्वको विधिरनित्य इति णुणि वृद्ध्यभावो वा ॥

चटुलः —बाहुलकादुलच् ॥

चटकः—' कुन् शिल्पिसंज्ञयोः ' इति कुन् ॥

चटका—अजादिपाठात् टाप् । अत एव 'प्रत्ययस्थात् ' इतीत्वाभावश्च ॥

चटकाया अपत्यं चाटकैरः—' चटकाया ऐरक् ' 'चटकाच्च ' इति वक्तव्यात् चटकस्यापत्यमपि चाटकैरः । स्त्रियां तु अपत्ये ' स्त्रियामपत्ये लुग्वक्तव्यः ' इति ऐरको लुकि चटका इति भवति ॥

भेदनार्थोऽयं चुरादौ ॥

**अट पट गतौ ॥ २९८-२९९ ॥**

अटति । आट । अटिता । अटिष्यति । अटतु । आटत् ।

---

* जनि[illegible]चाटिद[illegible]ो ञुण

अटेत् । आशिषि—अट्यात् । मा भवानटीत् 'नेटि' इति सिचि वृद्ध्यभावः ॥

अटिटिषति ॥ अटाट्यते । 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानम्' इति यङि अजादित्वात् ट्यशब्दस्य द्विर्वचने अभ्यासस्य 'दीर्घोऽकितः' इति दीर्घः । नन्वत्र यङेव कार्यी निमित्तं च ; एकस्य कार्यनिमित्तत्वे च विरुद्धे ॥ नैतत्, आकारभेदात् । अनभ्यासाकारेण कार्यी यङाकारेण निमित्तम् । तथ हि—देवदत्तशालायां ब्राह्मण आनीयतामित्युक्ते यदि देवदत्तोऽपि ब्राह्मणश्च शालांस्थश्च भवति तदा सोऽप्यानीयते । यङ्लुकि 'सन्यङोः' इत्यस्य षष्ठ्यन्तत्वात् यङपेक्षया पूर्वस्य कार्याभावात् 'न लुमता' इति प्रत्ययलक्षणस्य प्रतिषेधाभावाद्यङन्तत्वात् अट्शब्दस्य द्विर्वचने हलादिशेषे 'दीर्घोऽकितः' इति दीर्घे सवर्णदीर्घे च तिपष्टुत्वे आट्टि इति भवति । ईट्पक्षे तु अटीति । आट्टः । आटति । आट्सि । आट्ठ । आटांचकार इत्यादि । आड्ढि इत्यत्र धिभावे ष्टुत्वे पूर्वस्य जश्त्वं डकारः । लङिहल्ङ्यादिना तिस्योर्लोपे—आट् ॥

अटतीति अटा—अचि टाप् । तां करोति अटायते 'अटाट्या' इत्यादिना क्यङ् ॥

कुलस्य अटा कुलटा—शकन्ध्वादित्वात् 'कुलटाया वा' इति निर्देशाद्वा पररूपम् ॥

कुलटाया अपत्यं कौलटिनेयः, कौलटेयः—स्त्रीभ्यो ढकि 'कुलटाया वा' इति पक्षे इनङादेशोऽन्त्यस्य । यदाऽयं कुलटाशब्दः स्त्रीक्षुद्रायां वर्तते, क्षुद्रा दुश्शीला, अङ्गहीना वा तदा

'क्षुद्राभ्यो वा' इति ढ्रकि कौलटेरः इति भवति । तदभावे वाशब्देन ढकि कौलटेयः इति ॥

अटाट्या—'परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम्' इति गमनमात्रे शप्रत्यये द्विर्वचनहलादिशेषाभ्यासदीर्घेषु निपात्यते ॥

पटति । पपाट । पेटतुः । पेटिथ ॥ पटिता ॥
अपटीत् । अपाटीत्—'अतो हलादेः' इति वा वृद्धिः ॥
पिपटिषति ॥ पापट्यते पापटीति, पापट्टि ॥ इत्यादि ॥
पाटयति । अपीपटत् ॥

पाटूपटः—ण्यन्तात्पचाद्यचि 'पाटेर्णिलुक्चोक्चाभ्यासस्य' इति णिलुक् द्विर्वचनमभ्यासस्योगागम उपधादीर्घश्च, ऊको दीर्घोच्चारण-सामर्थ्यात् ह्रस्वस्याभावः । अस्यागमत्वसामर्थ्यान्न हलादिशेषः । अन्यथा आदेशमेव विदध्यादुकारम् । 'अभ्यासस्यानचि' इति वा हलादिशेषह्रस्वयोरभावः अभ्यासस्य यदुक्तं तदचि न इति । णेर-निटि' इति णिलोपे सिद्धे लुग्वचनं प्रत्ययलक्षणेन वृद्धेरभावार्थम् ॥

पाट्यका सुराविशेषः—पाट्यकालावदातसुरायामिति स्थूलादि-पाठात् ण्यदन्तादस्मात् कन् ॥

पटुः—'फलिपाटिनमिमनिजनां गुक् पटिनाकिधताश्च' इत्युप्रत्यये यथासंङ्ख्यात्पटादेशः । अत्र गुगेक आगमः, अन्ये आदेशाः ॥

पटोर्भावकर्मणी पटिमा—'पृथ्वादिभ्य इमनिज्वा' इतीमनिच्, 'टेः' इति टिलोपः । तदभावे 'इगन्ताच्च लघुपूर्वात्' इत्यणि पाटवम् ॥

गोष्ठेपटुः—'पात्रेसमितादयश्च' इति क्षेपे सप्तमीतत्पुरुषः । तत्रैव पाठादलुक् । गोष्ठ एव पटुः न सदसि इति क्षेपावगतिः ।

पटाका—'शालिपटिपतिभ्यो नित्' इत्याकिन्नित्च ॥

पटलम्—'वृषादिभ्यश्चित्' इति कलप्रत्ययः चिच्च ॥

पटलिका—'संज्ञायां कन्' ॥

पटीरः—'कृगृ' इत्यादिना ईरन् ॥

पाटलम्—ण्यन्तात्कलप्रत्ययो बाहुलकात् ॥

पाटली—'जातेरस्त्रीविषयादयोपधात्' इति ङीष् ॥

पाटल्याः पुष्पाणि पाटलानि—'बिल्वादिभ्योऽण्' इति विकारावयवयोरण् । तस्य 'पुष्पमूलेषु बहुलम्' इति लुप् तत्रैव बहुलग्रहणान्न भवति । लुपि हि कोशातक्याः फलानी—त्यादिवत् 'लुपि युक्तवद्व्यक्तिवचने' इति युक्तवद्भाव एव स्यात् ॥

**रट परिभाषणे ॥ ३०० ॥**

रटति इत्यादि ॥

परिराटी— 'संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च' इति परिपूर्वदस्मात्ताच्छीलिको घिनुण् ॥

परिराटकः—'निन्दहिंस' इत्यादिना वुञ् ताच्छीलिकः ॥

**लट बाल्ये ॥ ३०१ ॥**

लटति इत्यादि ॥

लट्वा—'अशूवृषिलटिकणिखटिविशिभ्यः क्वन्' इति क्वन् ॥

लाटयतीति लाटः ण्यन्तादच् । केवलाद्वा संज्ञायां घञ् ॥

शट रुजाविशरणगत्यवसादनेषु ॥ ३०२ ॥

शटति इत्यादि ॥

शाटकः—घञन्तात्संज्ञायां कन् ॥

शाटी—जातिलक्षणो ङीष् ॥

वट वेष्टने ॥ ३०३ ॥

वटति । ववाट । ववटतुः । वादित्वादेत्वाभ्यासलोपाभावः ॥

वटिः—'इन्' इतीन्प्रत्ययः ॥

वटिभः—'तुन्दिवलिवटेर्भः' इति मत्वर्थे भः ॥

वटकः—संज्ञायां कन् ॥

वटका—अन्नमस्यां पौर्णमास्यां वटकिनी पौर्णमासी—'तदस्मिन्नन्नं प्रायेण संज्ञायाम्' इत्यत्र 'वटकेभ्य इनिर्वक्तव्यः' इतीन् ॥

घटादावयं परिभाषणार्थः । पट वट ग्रन्थे इति कथादौ । वट वेष्टने इति क्षीरस्वामी । यस्तु तत्र विभाजनार्थः तं वटीति शाकटायनादयः पठन्ति । वटी विभाजने इति इहैवाग्रे चुरादौ चानदन्तेषु ॥

किट खिट त्रासे ॥ ३०४–३०५ ॥

केटति । चिकेट । केटिता ॥

चिकिटिषति, चिकेटिषति ॥ किटित्वा, केटित्वा इत्यादि ॥

एवं खेटति इत्यादि ॥

खेटः—'हलश्च' इति संज्ञायां घञ् । इह त्रासो भयोत्पादनम् । किटिः गत्यर्थोऽग्रे भविष्यति । इहैके न पठन्ति । पठताम्मैत्रेयादीनामर्थभेदात्पुनः पाठ इत्यभिप्रायः ॥

शिट षिट अनादरे ॥ ३०६-३०७ ॥

आद्यस्तालव्यादिः । अपरो मूर्धन्यादिः । शेटति । सेटति इत्यादि किटिवत् ।

सिसेटिषति सिसिटिषति इत्यत्र 'स्तौतिण्योरेव' इति नियमान्न षत्वम् । षोपदेशफलं तु सेषिटयते, असीषिटत् इत्यादौ ॥

जट झट संघाते ॥ ३०८-३०९ ॥

जटति । जजाट । जेटतुः । जटिता ॥

जटा—अजन्ताट्टाप् ॥

निन्दिता जटाऽस्य जटालो जटिलः—'जटाघटाकलाक्षेपे' इति सिध्मादौ पिच्छादौ च पाठाल्लजिलचौ । 'जटयपि' इति भाष्यकारप्रयोगादनदन्तत्वेऽपीनिः ॥

झटति । जझटतुः । झटिता इत्यादि ॥

भट भृतौ ॥ ३१० ॥

भटति इत्यादि ॥

भटित्रम् 'शूले संस्कृतं मांसम्' इति निघण्टुः । वेतनमित्युणादिवृत्तौ । 'अशित्रादिभ्यः' इतीत्रः । अयं घटादिः परिभाषणार्थः ॥

तट उच्छ्राये ॥ ३११ ॥

तटति ॥

तटोस्या अस्तीति तटिनी—'अत इनिठनौ' इति मत्वर्थे इनिः ॥

तटी—गौरादिपाठात् ङीष् ॥

तड आघात इति डकारान्तश्चुरादौ ॥

खट काङ्क्षायाम् ॥ ३१२ ॥

खटति ॥

खट्वा—'अशुवृषि' इत्यादिना क्वन् ॥

खट्वामारूढः खट्वारूढः जाल्मः—'खट्वा क्षेपे' इति क्षेपे गम्ये द्वितीयान्तस्य खट्वाशब्दस्य क्तान्तेन तत्पुरुषः ॥

णट नृत्तौ ॥ ३१३ ॥

अत्र पुरुषकारे—णट नृत्ते नृत्तावित्यपि क्षीरस्वामी इत्युभयथाऽपि नर्तनमित्येवार्थ इति । अयं णोपदेशः । 'नृति नन्दि' इति णोपदेशपर्युदासवाक्ये 'नाटि' इति सवृद्धिकस्य ग्रहणादस्य घटादित्वान्मित्त्वात् नाटि रूपाभावादग्रहणम् । यदाह हरदत्तः—'जासिनिप्रहण' इत्यत्र नट नृत्तौ इत्यस्य घटादिपठितस्याग्रहणम्, विकृतनिर्देशात् इति । अत एव णोपदेशपर्युदासविवरणेऽपि न्यासपदमञ्जरीपुरुषकारादिभिः अवस्पन्दनार्थस्य चौरादिकस्यैव ग्रहणं कृतम् । ननु क्षीरस्वामी घटादौ नट नृत्तौ इति पठित्वा नटयति शाखा इत्युदाहृत्य नृत्तौ नाटयति इ[ति] वक्ष्यति. अवश्यं हरदत्तादिभिरप्युभयत्र पाठसामर्थ्यादस्य [ ] ति इत्यङ्गीकार्यम्, तत्कथमुक्त विकृतनिर्देशादिति । उच्यते—द्वयोर्ग्रहणे नटीत्येव निर्दिशेत् न तु नाटीति विकृतम् । तत्सामर्थ्यात् यस्य नाटीत्येव रूपं तस्यैव पर्युदासो विज्ञास्यते न तु यस्य नटिरूपं नाटिरूपं च । ननु योस्ति घटदिधातुः नित्यं नटिरूपमापन्नः स एव विकृतनिर्देशेन व्यावर्त्येत, मैवम् येऽन्यत्र पठिता घटादौ पठ्यन्ते न ते पृथग्धातवः । किन्तु मित्त्वार्थमेव तेषामनुवाद इति तत्र स्थितत्वात् । इह

नृत्तिर्नर्तनम् यत्कारिषु नटव्यपदेशः । न तु मार्गदेशीशब्दाभ्यां प्रसिद्धं नृत्तं नृत्यं च, यत्कारिषु नर्तकव्यपदेशः । तत्र वाक्यार्थाभिनयो नाट्यम्, पदार्थाभिनयस्तु नृत्यम् । अभिनयशून्यः पुनः शास्त्रोक्ताङ्गभङ्गस्वगात्रविक्षेपो नृत्तम् इति तद्विदः । नैघण्टुकानां तु—'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तनम्' इति अभेदव्यवहारो निरूढलक्षणया नेयः । प्रणटति इत्यादि ॥

नटी—गौरादित्वात् ङीष् ॥

**पिट शब्दसङ्घातयोः ॥ ३१४ ॥**

पेटति । पिपेट । पेटिता इत्यादि ॥

पिपिटिषति, पिपेटिषति । पिटित्वा, पेटित्वा ॥

पेटयति । अपीपिटत् ॥

पिटकम्—'कुन् शिल्पिसंज्ञयोः' इति कुन् ॥

पिटाकः—'पिटाकादयश्च' इत्याकः

**हट दीप्तौ ॥ ३१५ ॥**

हटति । जहाट । हटिता । अहटीत् अहाटीत् इत्यादि ॥

हाटकम्—'संज्ञायां च' इति ण्वुल् । बाहुलकादस्त्रियामपि हाटशब्दात्कन्वा ॥

**षट अवयवे ॥ ३१६ ॥**

सटति । ससाट । सेटतुः । सटिता ॥

सिसटिषति—'स्तौतिण्योरेव' इत्यषत्वम् ॥

साटयति । असीषटत् ॥

सटा—अजन्ताट्टाप् ॥

लुट विलोडने ॥ ३१७ ॥

एतदादयः पठत्यन्ताष्टवर्गतृतीयान्ता इति कौशिककाश्यपनन्दिद्रविडाः । ते चास्मादनन्तरं पिटहटी च पेठुः । लोटति । लुलोट । लोटिता ॥

लुलुटिषति, लुलोटिषति ॥ लुटित्वा, लोटित्वा ॥

लोटयति । अलूलुटत्, अलुलोटत्,—काण्यादित्वादुपधाह्रस्वविकल्पः । भूसूत्रे सुधाकरः—लुल विलोडने इति लान्तोपि दृश्यते 'लोलद्भुजाकारबृहत्तरङ्गम्' इति माघः । डलयोरेकत्वस्मरणमिति वा प्रतिविधेयमिति । अयं दिवादावपि । भाषार्थश्चुरादौ, प्रतिघाते चुतादौ । इदित् स्तेयार्थः परस्मैपदिषु । लुण्टेति चुरादौ ॥

चिट परप्रेष्ये ॥ ३१८ ॥

चेटति इत्यादि पूर्ववत् । काण्यादित्वाभावो विशेषः ॥

चेटी—इन्नन्तात् 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीष् ॥

विट शब्दे ॥ ३१९ ॥

वेटति इत्यादि ॥

विटः—इगुपधलक्षणः कः ॥

विटपः—'विटपविष्टपविशिपोलपाः' इति निपातितः ॥

विट आक्रोशे ॥ ३२० ॥

वशादिः । वेटति इत्यादि । हिठेत्यत्र केचित्पठन्ति, हेठति इत्यादि ॥

इट किट कटी गतौ ॥ ३२१-३२२ ॥

अत्र मैत्रेयः—कटीति ह्रस्वान्तं पठन् ई इति चतुर्थं धातुमुक्त्वा मतान्तरेण दीर्घान्तं पठन् ई इति चतुर्थं धातुं दीर्घमुक्त्वा फलं च व्यपदेशिवद्भावेन गुरुमत्त्वेजादित्वाभ्यां अयाञ्चकार इत्याम्सिद्धिमाह । क्षीरस्वामी तु—त्रयो धातवः, तृतीय ईदिदित्यङ्गीकृत्य कटित्वा कट्टः, कट्टवान् इत्युदाहृत्य अन्ये कटीई इति धात्वन्तरं प्रश्लिष्टमाहुरिति चोक्त्वा कण्टति कण्टकः,

उदयति दिननाथे याति शीतांशुरस्तम् ॥

इति चोदाजहार । संमतातरङ्गिण्योस्तु—कटि इ इति चत्वारो धातवस्तृतीय इदिदिति व्याख्यायि । धनपालशाकटायनौ तु—त्रीनेव धातूनाहतुः । अयं पक्षः समर्थितः पुरुषकारे । यदाह—इ ई इति ह्रस्वदीर्घौ धातू प्रस्तुत्य अन्ये पुनरुभावपि न पठन्ति । व्यक्तं चैतत् धनपालशाकटायनवृत्त्योः । अपि च— शौट्ट गर्वे इत्यादिकान् कांश्चन धातून्पठित्वा अन्ते च उदात्ता इत्युच्यते ; तच्चास्मिन्प्रकरणे अयतेरपि पाठे सति तस्य 'अनिट् स्वरान्तो भवतीति दृश्यताम्' इत्यनुदात्तत्वात् प्राचुर्याभिप्रायेण कथंचिन्नेयं स्यात्, यथाऽऽह मैत्रेयरक्षितः—उदात्तत्वमयतिवर्जं भट्टग्रामन्यायेनोदात्ता इत्युच्यन्ते इति । स चायं न्यायः सुनिश्चित एवायतेः पाठे शोभते । विप्रतिपन्ने पुनरुदात्तत्वोक्त्याऽञ्जस्यवशादपाठ एव ज्यायान् । उदयतीत्यादि चैवमसाध्वेवास्त्विति । हरदत्तस्यापि प्रायः

आयमेव पक्षोऽभिमतः। यदाह 'उपसर्गस्यायतौ' इत्यत्र अयतिरनुदात्तेत्कथं तर्हि 'उदयति विततोर्ध्वरश्मिरज्जौ' इति परस्मैपदम्, किमनेन वन्यगजशौचेन, यदि वा पचाद्यजन्तादुदयशब्दादाचारक्विपि लट्। केचित्तु—इट किट कटी इत्यत्र इकारमपि धातुं पठन्तीति। वृत्तिकारोपि प्रायेणात्रैवानुकूलः। यदाह—'एतिस्तुशास्सु' इत्यत्र क्यपि इत्यः इत्युदाहृत्य कथमुपेयमिति, ईङ *एतद्रूपमिति। यदि हीमौ स्यातां प्राथम्यादनयोरेकमुपाददीत॥

अथोदाहरणानि—एटति। इयेट। ईटतुः। इयेटिथ। पिद्वचनेषु 'द्विर्वचनेऽचि' इति गुणस्य स्थानिवत्त्वादिट्शब्दस्य द्विरुक्तौ हलादिशेषे 'अभ्यासस्यासवर्णे' इतीयङ्। नन्वेवं गुणस्य स्थानिवत्त्वादवश्यं स पुनः प्रवर्तयितव्यः। तस्यां च दशायां गुणादन्तरङ्गत्वात् सवर्णदीर्घेण भाव्यम्। न चास्ति 'वार्णादाङ्गं बलीयः' इति, यत इदमाङ्गवार्णयोः समाननिमित्तत्वे प्रवर्तते। न च कार्यी निमित्तत्वे नाश्रीयते, सत्यम्—इदानीमेवाग्रे परिहरिष्यते। एटिता इत्यादि। इटिटिषति एटयति मा भवानिटिटत् णिलोपस्य स्थानिवत्त्वात् टिशब्दस्य द्विर्वचनम्। अतः पूर्वमेवोपधाह्रस्व इत्युक्तम्॥

केटति॥ चिकेट॥ केटिता॥

किटित्वा केटित्वा इत्यादि॥

किटिः—'इगुपधात्किच्च' इतीन्, कित्त्वान्न गुणः॥

कण्टति। चकण्ट। किण्टता॥ इत्यादि॥

कण्टकः—संज्ञायां कुन्॥

---

* ई इत्यस्यै

कण्टकितम् — तारकादित्वादितच् । अनिदिद्वादिनां कटति इत्यादि ।।

इ इति चतुर्थधातुवादिनाम्, अयति । इयाय । ईयतुः । ईयुः । इययिथ । इयेथ । भारद्वाजनियमादिड्विकल्पः । इय । इयय । इयाय । इयिव । इयिम ।। पिद्वचनेषु गुणवृद्धयोः 'द्विर्वचनेऽचि' इति स्थानिवत्त्वात् । इकारस्य द्विर्वचने 'अभ्यासस्यासवर्णे' इतीयङ् । अन्यत्र पूर्ववदियङ् । स्थानिवद्भावात् इशब्दस्य द्विरुक्तौ पुनरियङः प्रवर्तनायां तं बाधित्वा 'एरनेकाचः' इति प्राप्तं यणमन्तरङ्गत्वात् बाधित्वा सवर्णदीर्घे पुनरियङादेशः । यदाऽपि सवर्णदीर्घस्य यणश्चेकार आश्रयो भवति स्थानिवत्त्वेनेति समानाश्रयत्वाश्रयेण वार्णादाङ्गं बलीयः' इति दीर्घं बाधित्वा यण् प्रवर्तते तदाऽपीदमेव रूपम् । अत्र पक्षे इययिथेत्यत्रापि न दोषः । यतस्तत्रापि समानस्थानित्वेनास्ति समानाश्रयत्वं दीर्घगुणयोः । एवमपि न सिद्ध्यति. यदत्र द्विर्वचनकालेऽपहृतो गुणः पुनः प्रवर्तते । ततश्चानादिष्टादचः पूर्वत्वेनाभ्यासो दृष्ट इति तस्य 'अभ्यासस्यासवर्णे' इति इयङि कर्तव्ये गुणस्य स्थानिवत्त्वात् असवर्ण इति प्रतिषेधः स्यात् । एवं तर्हि, अत एव असवर्णग्रहणसामर्थ्यात् स्थानिवत्त्वं न भविष्यति । नन्वयमस्ति वचनस्यावकाशोऽर्तेर्लिटि द्विर्वचने 'अर्तिपिपर्त्योश्च' इति अभ्यासेत्वे इयर्ति. इयृत इत्यादि । नैतत् । न ह्येकमुदाहरणं योगारम्भं प्रयोजयति । इयति प्रयोजने 'अभ्यासस्यार्तौ' इत्येव ब्रूयात् । उवोऽणादि तु न प्रयोजनम् । तस्य छान्दसत्वे 'तन्वादीनां छन्दस्युपसङ्ख्यानम्' इति सुवर्गादिवदुवङः सिद्धत्वात् । भाषायामामा भाव्यम् ।।

एता । एष्यति । स्वरान्तत्वादनिट्त्वम् । अयतु

आयत् । आयेत् । आशिषि—ईयात्—'अकृत्सार्वधातुकयोः' इति दीर्घः । ऐषीत् । मा भवानेषीत् । ऐष्यत् ।।

कर्मणि—ईयते । इत्यादि ।।

स्यादौ चिण्वदिटि वृद्धौ आयिष्यते । इत्यादि ॥

ईषिषति, 'अज्झनगमां सनि' इति दीर्घः । 'इको झलि' इति सनः कित्त्वान्न गुणः ।।

आययति । मा भवानयियत्, णौ चङि वृद्धयाययोः 'णौ चङि' इति ह्रस्वे णिलोपे तस्य स्थानिवत्त्वेन यिशब्दस्य द्विर्वचनम् ।।

इतः । इतवान् ।।

प्रेत्य— ल्यपि 'षत्वतुकोरसिद्धः' इत्येकादेशस्यासिद्धत्वात् ह्रस्वनिबन्धनस्तुक् । किटेति मैत्रेयमतेन त्रासे गतः । कटिश्चेदित् वर्षावरणयोः ।।

## मडि भूषायाम् ॥ ३२३ ॥

मण्डति । ममण्ड । मण्डितेत्यादि ।।

मण्डते कन्या स्वयमेव । अमण्डिष्ट कन्या स्वयमेव । भूषाकर्मत्वात् यक्चिणोर्निषेधः ।।

मिमण्डिषति । मामण्ड्यते । अमामन् । मण्डयति । अममण्डत् ।।

मण्डनः—'क्रुधमण्डार्थेभ्यश्च' इति युच् । मण्ड इति विभागे गतः ।।

कुडि वैकल्ये ॥ ३२४ ॥

कुण्डतीत्यादि ।

कुण्डत इति दाहे गतम् । अत्र स्वामी कुटीति कौशिकदुर्गाविति । शाकटायनः पुनः प्रकरणानुरोधेन डान्तमेवाध्यगीष्ट ॥

मुटि प्रमर्दने ॥ ३२५ ॥

मोटति । मुमोट । मोटिता ॥

मुमुटिषति, मुमोटिषति । मुटित्वा । मोटित्वा । 'रलो व्युपधात्' इति किस्त्वविकल्पः । मुडेति धनपालः । पुडेति पकारादिः डान्त इति शाकटायनः । क्षीरस्वामी तु द्वावपीदितौ पपाठ । मैत्रेयस्तु अमुं टान्तमेव पठित्वा मुडि खण्डने इति चाग्रे पठित्वा पुडि चेत्येक इत्याह । मुट प्रमर्दनाक्षेपयोः इति तुदादौ । मुट सञ्चूर्णने इति चुरादौ ॥

चुटि अल्पीभावे ॥ ३२६ ॥

चुण्टतीत्यादि ॥

चुटेति दुर्गः । चुट छेदने इति तुदादौ । चुटचुटी द्वावपि चुरादौ ॥

मुडि खण्डने । ३२७ ॥

मुण्डतीत्यादि ।

मुण्डः । मुण्डं करोति मुण्डयति—'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' इति करोत्यर्थे णिचि णाविष्ठवदिति टिलोपः ॥

यवनमुण्डः । काम्बोजमुण्डः । मयूरव्यंसकादित्वाद्विशेषणस्य परनिपातः ॥

अत्र मैत्रेयः—'पुडि चेत्येके । पुण्डति । पुण्ड्रः । पुण्डरीकमिति । उकारवत्पवर्गादिप्रकरणादिहायं निर्दिश्यते । मडि भूषायामित्युकारवान्न भवति' इति । डकारान्तोऽप्यकारवत्त्वादादौ निर्दिष्ट इति मैत्रेयः । अत्र शुठि खण्डनप्रमर्दनयोरिति क्वचित् धातुकोशे पठ्यते । मैत्रेयादयस्तु न पठन्ति । तत्र आद्यपाठ एव ज्यायान्यदिहैवाग्रे शुठि शोषण इति भविष्यति । अस्मिन् हि सति तस्य चास्य च रूपाभेदात् शोषणग्रहणमपीहैव कर्तव्यं स्यात् ॥

## रुटि लुटि स्तेये ॥ ३२८-३२९ ॥

रुण्टति । लुण्टतीत्यादि ॥

रुटिलुठीत्येक इति क्षीरस्वामी । शाकटायनस्तृतीयान्तौ पपाठ । लोटतीति विलोडने गतम् । लुट प्रतिघात इति द्युतादौ । रुष रोषणे इति चुरादौ । तत्र रुटेत्येके ॥

## स्फुटि र् विशरणे ॥ ३३० ॥

अयं पाठो मैत्रेयादीनाम् । स्फोटति । पुस्फोट । स्फोटिता ॥ पुस्फुटिषति । पुस्फोटिषति ॥

स्फुटित्वा । स्फोटित्वा । इत्यादि ।

इकाररेफयोः—'उपदेशेऽजनुनासिक इत्' 'हलन्त्यम्' इतीत्वम् । तेन लुङि 'इरितो वा' इति परस्मैपदे विधीयमानोऽङ्विकल्पो भवति—अस्फुटत्, अस्फोटीदिति ॥

'इदितो नुम् धातोः' इति नुम् अन्तेदितो विधानादस्य न भवति । स्फुटेति चन्द्रः । अस्याङ् नास्ति । स्वामिकाश्यपौ तु—स्फुटिस्फुटस्फटेति त्रीन् धातून् पेठतुः । स्फुण्टति । स्फोटति । स्फटतीत्यादि ।

स्फटा—अचि टाप् ॥

स्फुट विकसने इत्यात्मनेपदिषु टान्तः ॥

**पठ व्यक्तायां वाचि ॥ ३३१ ॥**

पठति । पपाठ । पेठतुः ॥ पठिता ॥ अपठीत्, अपाठीत् ॥

पाठयति श्लोकं पुत्रमित्यादि ॥

**वठ स्थौल्ये ॥ ३३२ ॥**

वठति । ववाठ । वठिता । इत्यादि । वादित्वान्नैत्वाभ्यासलोपौ—ववठतुः ववठुः । वठि एकचर्यायामात्मनेपदी गतः ॥

**मठ कठ मदनिवासयोः ॥ ३३३-३३४ ॥**

अयं पाठो मैत्रेयस्य । अन्येषां मठ मदनिवासयोः । कठ कृच्छ्रजीवने इति । मठति । कठति । इत्यादि ॥

कठः — अच् ॥

कठेन प्रोक्तं छन्दः 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति वैशम्पायनान्तेवासित्वात् णिनिः । तस्य 'कठचरकाल्लुक्' इति लुक् । 'छन्दो ब्राह्मणानि च तद्विषयाणि' इति नियमात् 'तदधीते तद्वेद' इति अध्येतृवेदितृप्रत्ययान्त एव प्रयोगार्हः । तस्य चाणः 'प्रोक्ताल्लुक्' इति लुक् । तदेवं कठेन प्रोक्तं छन्दोऽधीयमानोऽपि कठः ॥

कठिनम् । औणादिक इनच ।।

वंशकठिने व्यवहरति वांशकठिनिकः । 'कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति' इति कठिनान्तादिभ्यः सप्तम्यन्तेभ्यो व्यवहरतीत्यर्थे ठगिति ठक् । ठस्येकः ।।

कठोरम् । 'कठिचकिभ्यामोरच्' इत्योरच् ।।

अनन्तरं अठ गताविति क्वचित्पठ्यते । मैत्रेयादयस्तु न पठन्ति ।। अठतीत्यादि ।।

**रठ परिभाषणे ।। ३३५ ।।**

रठतीत्यादि ।

**हठ प्लुतिशठत्वयोः ।। ३३६ ।।**

हठति । जहाठेत्यादि ।।

हठ बलात्कारे इति चन्द्रदुर्गौ ।।

**रुठ लुठ उपघाते ।। ३३७-३३८ ।।**

रोठति, लोठतीत्यादि । अत्र मैत्रेयः—उठेत्यप्येके इति । धनपालशाकटायनौ तु रुठलुठेत्येव पेठतुः । क्षीरस्वामी तु उठिं पठित्वा रुठ लुठ इत्यपि दौर्गाः इत्याह । ओठति । उवोठ । ऊठतुः । ओठितेत्यादि । एठतिवत्प्रक्रिया ।।

लुठेः काण्यादित्वात् मालूलुठत्, अलुलोठत् इति भवति ।।

अयं श्लेषणे तुदादिः । लुठि आलस्ये प्रतिघाते च । रुठि लुठि गतावित्यग्रे इदितौ । लुठ श्लेषणे इति तुदादौ ।। असौ डान्त इत्येक इति मैत्रेयः । तथा च स्वामी लुठतीति लक्ष्यदर्शनात् तुदादौ पाठ इति । लुठ प्रतिघात इति द्युतादौ ।।

पिठ हिंसासङ्क्लेशनयोः ।। ३३९ ।।

पेठति इत्यादि ।।

पीठम्—घञ् । 'अन्येषामपि दृश्यते' इति दीर्घः ।।

पीठी—इन्नन्तात् 'कृदिकारादक्तिनः' इति ङीष् ।।

शठ कैतवे च ।। ३४० ।।

चकाराद्धिंसासङ्क्लेशनयोश्च । शठति इत्यादि । स्वाम्यादयः पुनः चकारं नैव पेठुः । गत्यसंस्कारयोरयं चुरादौ । तत्रैव श्लाघाया-मात्मनेपदिषु । सम्यगवभाषणे कथादौ ।।

शुठ गतिप्रतिघाते ।। ३४१ ।।

प्रतिघात इत्येव धनपालः । तथा च कुठि इत्युत्तरधातौ प्रतिहतिमात्रं प्रतीयते अतिशिष्यते* इत्यर्थ इति स एवाह । शोठति इत्यादि । शुठीति क्षीरस्वामी ।।

शुठ आलस्य इति चुरादौ । शुठि शोषणे इति अत्रैवाग्रे ।।

कुठि च ।। ३४२ ।।

कुण्ठति इत्यादि । कुण्ठः ।।

लुठि आलस्ये प्रतिघाते च ।। ३४३ ।।

लुण्ठति इत्यादि । लोठतीत्युपघाते गतम् ।।

शुठि शोषणे ।। ३४४ ।।

शुण्ठति ।। शुण्ठः ।। शुण्ठी ।।

शोठतीति गतिप्रतिघाते गतः ।।

---

*अनिश्चित·

रुठि लुठि गतौ ।। ३४५-३४६ ।।

अर्थभेदात्पुनः पाठो लुण्ठेरित्याहुः । रुण्ठति लुण्ठतीत्यादि ।।

चुड्ड भावकरणे । ३४७ ।

भावकरणमभिप्रायसूचनम् । चुड्डति । चुचुड्ड । चुड्डिता इत्यादि ।।

चुचुड्डिषति । चोचूड्यते । अचोचुत् । अयं दोपध इति संयोगान्तलोपे तकारस्य श्रवणं भवति ।।

चुड्डयति । अचुचुड्डत् ।।

अड्ड अभियोगे ।। ३४८ ।।

अयमपि दोपध इति क्विपि अत् इति भवति ।।

अड्डति । आनड्ड । अड्डिता ।।

अड्डिडिषति । 'न न्द्राः' इति दकारवर्जस्य द्विर्वचनम् ।

अड्डयति । आड्डिडत् ।।

कड्ड कार्कश्ये ।। ३४९ ।।

कड्डति इत्यादि ।।

अस्यापि दोपधात्वात् यङ्लुकि लङि क्विपि च अचाकत्, कत् इति च भवति । कच्च तत् जलं च कज्जलम् ।।

क्रीडृ विहारे ।। ३५० ।।

क्रीडति । चिक्रीड क्रीडिता ।।

चिक्रीडिषति । चेक्रीड्यते । चेक्रीट्टि । अचेक्रीट् ।

आक्रीडते—'क्रीडोऽनुसम्परिभ्यश्च' इति अन्वादिपूर्वाच्चकाराराङ्पूर्वाच्च तङ्। एवमनुक्रीडत इत्याद्युदाहार्यम्। समा साहचर्यादनोरुपसर्गस्य ग्रहणम्। तेन 'तृतीयार्थे' इति यदा अनोः कर्मप्रवचनीयत्वं तदा तङ् न भवतीति माणवकमनुक्रीडतीति। माणवकेन सह क्रीडतीत्यर्थः। 'कर्मप्रवचनीययुक्ते द्वितीया' इति माणवकात् द्वितीया।

सङ्क्रीडन्ति शकटानि, इत्यत्र 'समोऽकूजन इति वक्तव्यम्' इत्युक्तत्वान्न तङ्। कूजन्ति शकटानीति ह्यत्रार्थः॥

आक्रीडी—'सम्पृच' इत्यदिना घिनुण्॥

चिक्रीडः—'क्रुआदीनां के द्वे भवतः' इति कप्रत्यये द्विर्वचनम्॥

## तुडृ तोडने॥ ३५१॥

तोडनं दारणं हिंसनं चेत्युक्तम्। तोडति। तुतोड। तोडितेत्यादि॥

तूड इति स्वामिशाकटायनौ। तुण्डत इत्यात्मनेपदी गतः॥

## हूडृ होडृ गतौ॥ ३५२-३५३॥

हूडति। जुहूड। हूडिता॥

हूडयति। अजुहूडत्॥

होडति। जुहोड। होडिता॥

होडयति। अजुहोडत्। इत्यादि॥

हुडृ हूड गताविति धनपालशाकटायनौ॥ होडते इत्यनादरे गतः॥

रौडृ अनादरे ॥ ३५४ ॥

रौडति इत्यादि ॥

रोडृ लोडृ उन्मादे ॥ ३५५-३५६ ॥

रोडति ॥ लोडति इत्यादि ॥

अड उद्यमने ॥ ३५७ ॥

अडति । अडो वृश्चिकलाङ्गूलम् । तेन तैक्ष्ण्यं लक्ष्यते ॥ विशिष्टोऽडस्तैक्ष्ण्यमस्य व्यडः । तस्यापत्यं व्याडिः 'अत इञ्' 'स्वागतादीनां च' इति वृद्धिप्रतिषेधैजागमयोर्निषेधः ॥

लड विलासे ॥ ३५८ ॥

लडति इत्यादि । जिह्वोन्मथने घटादौ । अनन्तरम्—'लल ईप्सायाम्' इति क्वचित्पठ्यते । तत् क्षीरस्वामिपुरुषकारादयो नानुमन्यन्ते । यत् रलयोर्डलयोश्चैकत्वस्मरणात् लालयति ललनेत्याहुः । 'लड उपसेवायाम्' इति चुरादौ ॥

कड मदे ॥ ३५९ ॥

कडति इत्यादि । क्षीरस्वामी तु कडीति पठित्वा कडेति दुर्गं इत्याह । अथ तुदादौ च । उभयत्र पाठफलं तत्रैव वक्ष्यते । कण्डत इति गतः ॥

गडि वदनैकदेशे ॥ ३६० ॥

गण्डति इत्यादि । अत्र वक्तव्यं अतत्यादिष्वमुं पठित्वोक्तम् ॥

शौटादयः उदात्ता उदात्तेतः ॥

तवर्गान्ताः केचनैधत्यादयो गताः, केचन द्युतादौ वक्ष्यन्ते इति क्रमप्राप्तानात्मनेपदिनः पवर्गान्तानाह—

**तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः ॥ ३६१-३६४ ॥**

एतदादयस्तोभत्यन्ता उदात्ता अनुदात्तेतः ॥

'तर्पि तिपिं चापिं' इत्यनिट्कारिकासु पाठात् तिपिरेकोऽनुदात्तः । ऋदित्पवर्गान्तात्मनेपदित्वसाम्यादर्थसाम्याच्चेह पाठः । क्षीरस्वामिना त्वयं सेडुदाहृतः । तत्काश्यपवृत्तिन्यासपदमञ्जर्यादिविरोधात् 'तापिं तिपिं' इति व्याघ्रभूतिवचनविरोधाच्चोपेक्ष्यम् ॥

तेपते । तितेपे । तितिपिषे । तितिपिवहे । क्रयादिनियमादिट् ॥ तेप्ता ॥ तेप्स्यते ॥ तेपताम् । अतेपत ॥ तेपेत ॥ आशिषि—तिप्सीष्ट ॥

अतिप्त । अतिप्साताम् । झलि सिज्लोपः 'लिङ्सिचावा-त्मनेपदेषु' इतीक्समीपाद्धलः परयोः झलाद्योर्लिङ्सिचोः कित्वान्न गुणः । आत्मनेपदेष्विति सिच एव विशेषणम्, न लिङः ; परत्वासम्भवात्, परस्मैपदिषु झलादित्वासम्भवाच्च ॥

तितिप्सते । तितिप्सेते । 'हलन्ताच्च' इतीक्समीपाद्धलः परस्य झलादेस्सनः कित्वान्न गुणः ॥

तेतिप्यते । तेतिपीति, तेतेप्ति ॥

तेपयति । अतितेपत् । ऋदित्वात् णौ चङि ह्रस्वाभावः ॥

तेपते । तितेपे । तेपिता । तेपिष्यते । तेपताम् । अतेपत । तेपेत । तेपिषीष्ट । अतेपिष्ट ॥

तितेपिषते । तेतेप्यते । तेतेपीति, तेतेप्ति । तेपित्वा ।।

स्तेपते । तिष्टेपे । तिष्टिपाते । अभ्यासे खयः शेषः ।।

स्तेपितेत्यादि । तेपिवत् ।।

तिस्तेपिषते, तिस्तिपिषते । स्तिपित्वा, स्तेपित्वा, । 'स्तौतिण्योरेव' इत्यषत्वम् । 'रलो व्युपधात्' इति वा कित्त्वम् ।

तेष्टिप्यते ।। तेष्टिपीति, तेष्टेप्ति । तेष्टिप्तः ।।

तेपिवत् ष्टेपिः ।। अभ्यासे खयश्शेषो विशेषः । धिपृ धेपृ इति च काश्यपः ।

**तेपृ कम्पने च ।। ३६५ ।।**

**ग्लेपृ दैन्ये ।। ३६६ ।।**

ग्लेपते इत्यादि ।।

**टु वेपृ कम्पने ।। ३६७ ।।**

वेपते ।।

वेपथुः—'ट्वितोऽथुच्' इत्यथुच् ।।

विपिनम्—'वेपितुह्योर्ह्रस्वश्च' इतीतचि ह्रस्वः ।।

**केपृ गेपृ ग्लेपृ च ।। ३६८-७० ।।**

चकारात्कम्पने गतौ च सूत्रविभागादिति स्वामी । मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पन इत्यपेक्ष्यत इत्याह । वेपतिना सहैषामपाठोऽप्रसिद्धत्वज्ञापनायेति तस्याभिप्रायः । ग्लेपेरर्थभेदात्पुनः पाठः । केपते । इत्यादि ।।

वेपादीनां तेपतेश्च चलनार्थत्वात् ‘ निगरणचलन ’ इति णौ परस्मैपदमेव ॥

एषामनुदात्तेत्त्वात् ‘ चलनशब्दार्थादकर्मकाद्युच् ’ इति युचि वेपनः इत्युदाहार्यम् ॥

मेपृ रेपृ लेपृ गतौ ॥ ३७१-३७३॥

अयं पाठः स्वामिनः । मैत्रेयस्तु— मेपृ, लेपृ, सेवने । रेपृ गतावित्याह । मेपते ॥ रेपते ॥ लेपते, । इत्यादि । क्वचित्पठ्येते—हेपृ, धेपृ, इति च ॥

त्रपूष् लज्जायाम् ॥ ३७४ ॥

त्रपते ॥

त्रेपे—‘ तॄफलभजत्रपश्च ’ इति किति लिटि सेटि थलि च एत्वाभ्यासलोपौ । त्रपेस्थल् नास्ति । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । ऊदित्त्वादिड्विकल्पः ॥

त्रपताम् । अत्रपत । त्रपेत । आशिषि —त्रपिषीष्ट, त्रप्सीष्ट ॥

अत्रपिष्ट, अत्रप्त । झलि सिचो लोपः ।

तित्रपिषते, तित्रप्सते ॥ तात्रप्यते ॥ तात्रपीति, तात्रप्ति ॥

त्रपयति । अतित्रपत् ॥ घटादित्वान्मित्त्वम् ॥

त्रपित्वा । त्रप्त्वा ॥

त्रप्तः । त्रप्तवान्—‘ यस्य विभाषा’ इति निष्ठायामिण्णिषेधः ॥

त्राप्यम् , ‘ आसुयुवपिरपिलपित्रपिचमश्च ’ इति भावे ण्यत् । ‘ पोरदुपधात् ’ इति यतोऽपवादः ॥

त्रपा—' पिद्भिदादिभ्योऽङ् ' इति स्त्रियामङ् ॥

अपत्रपिष्णु :—' अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्र-पवृतुवृधुसहचर इष्णुच् ' इति ताच्छील्यादाविष्णुच् ॥

त्रपु—' शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ' इत्यु-प्रत्ययः ॥

त्रपुणो विकारः त्रापुषम्—' त्रपुजतुनोः षुक् ' इति षुगा-गमोऽण् प्रत्ययश्च ॥

**कपि चलने ॥ ३७५ ॥**

कम्पते । चकम्पे । कम्पितेत्यादि ॥

कम्पयति—' निगरणचलन ' इति नित्यं परस्मैपदम् ॥

कम्प्रः—' नमिकम्पिस्म्यजसकमहिंसदीपो रः ' इति ताच्छी-ल्यादौ रः । वासरूपविधिना ' अनुदात्तेतः ' इति वा ' चलनशब्द ' इति वा युचि कम्पनः ॥

ननु पदेरनुदात्तेत्त्वादेव युचि सिद्धे जुचङ्क्रम्यादिना पुनर्युज्वि-धानेन ताच्छीलिकेषु वासरूपविधिः नेति ज्ञापितम् । अन्यथा ' लषपतपद ' इत्युकञा अनुदात्तेल्लक्षणस्य युचः समावेशसिद्धेः पुनस्त-द्विधानमनर्थकं स्यात् । नैतदस्ति । ' सूददीप ' इति दीपेः युज्निषे-धात् अस्यानित्यत्वज्ञापनात् । नित्ये हि नमिकम्पीत्यादिना विशे-षविहितेन रप्रत्ययेन युचो बाधस्य सिद्धत्वात् किं तन्निषेधेन ॥

विकपितः—विकृतशरीर इत्यर्थः । ' लगिकम्प्योरुपतापशरी-रयोः ' इति नलोपः ॥

कपिः—'कटिकम्प्योर्नलोपश्च' इतीन्प्रत्यये नलोपः ॥

कपेर्भावकर्मणी कापेयम् । 'कपिज्ञात्योर्ढक्' इति ढक् ॥

वृषो धर्मः तस्याकपिः अकम्पिता वृषाकपिः । विष्णुः, रुद्रश्च ॥

वृषाकपायी—श्रीः गौरी च । 'वृषाकपि' इत्यादिना पुंयोगलक्षणे ङीपि अन्त्यस्यैकारः ॥

कपिलः—'कपेश्च' इतीलचप्रत्ययः, बाहुलकादत एव निर्देशाद्वा नलोपः ॥

कबलः, कम्बलः—बाहुलकात् कलप्रत्ययः । पकारस्य बकारः पक्षे नलोपश्च ॥

कम्बल्यम् । ऊर्णा (पल) शतम् । कम्बलाय हितमिति विषये 'कम्बलाच्च संज्ञायाम्' इति यत् ॥

द्वाभ्यां कम्बल्याभ्यां क्रीता शाटी द्विकम्बल्या—'तद्धितार्थोत्तरपदसमाहारे च' इति तद्धितार्थे समासे 'द्विगुश्च' इति द्विगुत्वे 'प्राग्वतेष्ठञ्' इति प्राग्वतीयेष्वर्थेषु विहितस्य ठञः 'अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्' इति लुक् । अत्र 'द्विगोः' इति प्राप्तस्य ङीपः 'अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि' इति निषेधः । अपरिमाणान्तात् परिमाणत्वेऽपि बिस्ताद्यन्ताच्च द्विगोः तद्धितलुकि सति ङीब्नेति सूत्रार्थः ॥

पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बली—'पाण्डुकम्बलादिनिः' इति पाण्डुकम्बलशब्दात्तृतीयान्तात् परिवृतो रथ इत्यर्थे इनिः । येन यत्परिवृतं तत्तस्यास्ति इति मत्वर्थीयेनेनिना सिद्धे इदं वचनं ठनो निवृत्त्यर्थम् ॥

रबि लबि अबि शब्दे ॥ ३७६–३७८ ॥

रम्बते । ररम्बे । रम्बिता ॥

रिरम्बिषते ॥ रारम्ब्यते ॥ रारम्बीति, रारम्प्ति । अरारन् ॥

हे इति रम्बत इति हेरम्बः ॥

लम्बते इत्यादि ॥

अम्बते ॥ आनम्बे ॥ अम्बिबिषते ॥ अम्बयति ॥ आम्बिबत् ॥

त्रीण्यम्बकानि चक्षूंषि अस्येति त्र्यम्बकः । त्रयाणां लोकानामम्बः पिता इत्यागमविदः । द्यौर्भूमिरापस्तिस्त्रोऽम्बा अस्येति भारतम् । अम्बः शब्दः, त्रयश्शब्दाः अकारोकारमकाराः प्रतिपादका अस्येति भट्टभास्करः । स एव सृष्टिस्थितिसंहारविषयास्तिस्त्रोऽम्बाः शक्तयोऽस्येति च ॥

अम्बरीषम्—'भ्राष्टमम्बरीषम्' इति निपात्यते ॥

अम्बा । हे अम्ब—'अम्बार्थनद्योः' इति ह्रस्वः सम्बुद्धौ ॥

लबि अवस्रंसने च ॥ ३७९ ॥

अलाबूः—'नञि लम्बेर्नलोपश्च' इति नञि उपपदे ऊकारप्रत्ययो नलोपश्च णिद्वद्भावाद्वृद्धिश्च ॥

कबृ वर्णे ॥ ३८० ॥

कबते । चकबे । कबिता ॥

चिकबिषते ॥ चाकब्यते ॥ चाकप्ति ॥

काबयति । अचकाबत् ॥

कबरः—बाहुलकादरः ॥

कबरी—' जानपद ' इत्यादिना केशवेशे ङीष् । अन्यत्र कबरा ॥

कर्बुरः—बाहुलकादुरप्रत्ययो रेफोपजनश्च ॥

## क्लीबृ अधाष्टर्ये ॥ ३८१ ॥

क्लीबते । चिक्लीबे । क्लीबिता ॥

क्लीबयति । अचिक्लीबत् ॥

क्लीब इवाचरति क्लीबते— ' आचारेऽवगल्भक्लीब ' इति क्विप् तत्सन्नियोगेन चैषामकारस्यानुदात्तताऽनुनासिकताप्रतिज्ञानात् अनुदात्तेत्त्वात्तङिति होडतौ प्रतिपादितम् । क्विबभावे—' उपमानादाचारे ' इति क्यङि क्लीबायते ॥

## क्षीबृ मदे ॥ ३८२ ॥

क्षीबते । चिक्षीबे । क्षीबिता ॥

क्षीबयति । अचिक्षीबत् ॥

क्षीबः—' अनुपसर्गात्फुल्लक्षीब ' इति निष्ठायामिडभावस्तलोप इच्छब्दलोपो वा निपात्यते ॥

## शीभृ कत्थने ॥ ३८३ ॥

शीभते । शिशीभे । शीभिता ॥

शिशीभिषते । शेशीभ्यते ॥

शीब्धि—' झषस्तथोः ' इति तकारस्य धकारे ' झलां जश् झशि ' इति भकारस्य बकारः ॥

शीभयति । अशिशीभत् ॥

32

शीभरः—बाहुलकादरः ॥

चीभृ च ॥ ३८४ ॥

चीभत इत्यादि ॥

रेभृ शब्दे ॥ ३८५ ॥

रेभते । अरेभत । इत्यादि ॥

विरिब्धः—'क्षुब्धस्वान्त' इत्यादिना स्वरे निष्ठायामिडभावे उपधाह्रस्वत्वं च निपात्यते ॥ अन्यत्र रेभितः ॥

अभिरभी च क्वचित्पठ्येते । अम्भते । रम्भते ॥

अम्भः—असुन् ॥

अम्भसोऽपत्यम् आम्भिः—'संभूयोऽम्भसोः सलोपश्च' इति बाह्वादिपाठादिञि सलोपः ॥

ष्टभि स्कभि प्रतिबन्धे ॥ ३८६-३८७ ॥

स्तम्भते ॥ तस्तम्भे—खयः शेषः ॥ स्तम्भिता ॥

तिस्तम्भिषते—'स्तौतिण्योरेव' इत्यषत्वम् ॥

षोपदेशफलम्—ण्यन्तात्सनि—तिष्टम्भयिषति, इति षत्वम् ॥

उत्तम्भते । उत्तम्भिता ॥ उत्तम्भितः—'उदस्स्थास्तम्भोः पूर्वस्य' इति उदः परयोस्सकारस्थाने पूर्वस्य सवर्ण इति तकारः । 'स्तम्भेः' इत्यादौ उपसर्गात्परस्य षत्वविधौ 'स्तम्भु-स्तुम्भु' इति प्रतिपदोक्तस्यैव स्तम्भेः ग्रहणं, न त्वस्य लाक्षणिकस्येति विस्तम्भत इत्यादौ न षत्वम् ॥ 'उदस्स्थास्तम्भोः' इत्यत्र तु नायं न्यायः । यतस्तम्भुरूपमुभयोरपि लाक्षणिकम् ।

अत्र स्वामिमैत्रेयौ ष्टभेष्टकारमेकीयमतेनौपदेशिकमाहतुः । तत्र ष्टम्भते. विष्टम्भते, इत्यादौ सर्वत्र ष्टुत्वेन षत्वे लिडादावभ्यासे टकारस्य शेषे तष्टम्भ इत्यादि भवति ॥

स्कम्भते । चस्कम्भे । स्कम्भिता ॥

स्कभितः—'ग्रसितस्कभित' इति निपातनं छन्दसि । 'वेः स्कभ्नातेर्नित्यम्' इति षत्वं श्नानिर्देशात् सौत्रस्यैव नास्येति वि कम्भते इति भवति । 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भु' इति सौत्राश्चत्वारो धातवः ; ते च 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यश्श्नुश्च' इति श्नाश्नुविकारणा इति नात्रोदाह्रियते । स्तोभते इत्यग्रे स्तम्भार्थे ॥

जभि जृभि गात्रविनामे ॥ ३८८-३८९ ॥

जभी इत्येके । जब्धमिति मैत्रेये । अयमेव पाठः प्रायेण वृत्तिकारस्य सम्मतः. यदाह—'रधिजभोरचि' इत्यत्र अज्ग्रहणप्रत्युदाहरणे 'रब्धा जब्धम्' इति । अनीदित्वे इटा भाव्यमिति कथमेवमुदाहरेत् ॥

जम्भते । जजम्भे । जम्भिता । जम्भिष्यते । जम्भताम् । अजम्भत । जम्भेत । जम्भिषीष्ट । अजम्भिष्ट । अजम्भिष्यत ॥

जिजम्भिषते—'रधिजभोरचि' इत्यजादौ प्रत्यये नुम् ॥

जञ्जभ्यते—'लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्' इति यङ् । भावो धात्वर्थः तस्य गर्हा भावगर्हा । अयं च यङ्

पूर्वसूत्रान्नित्यग्रहणानुवृत्त्या तक्रकौण्डिन्यन्यायेन वा क्रियासमभिहारयङो बाधक इति भाष्यादौ स्थितम् । 'जपजभदहदशभञ्जपशां च' इति अभ्यासस्य यङि यङ्लुकि च नुगागमः । इदं च नुग्ग्रहणम् अनुस्वारोपलक्षणार्थम्, 'नुगतोऽनुनासिकान्तस्य' इत्यत्रान्तग्रहणात् । तद्धि तत्र तदन्तविधिनाऽपि अनुनासिकान्तस्य धातोरभ्यासस्य नुकि सिद्ध तदन्तस्य यत्कार्यं तद्यथा स्यादिति । न च नुकोऽन्त्यत्वे किञ्चित्कार्यमस्ति । अस्ति चानुस्वारस्य 'वा पदान्तस्य' इति परसवर्णविकल्पः । 'कर्तुः क्यङ् स' इतिवदनुनासिकेत्यविभक्तिको निर्देशः । तेन जंजभ्यते इत्यत्रानुस्वारस्यापि पक्षे श्रवणं भवति । जञ्जभीति, जञ्जब्धि । जञ्जब्धः । जञ्जंभति । इत्यादि ॥ 'रधिजभोरचि' इत्यत्र 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इत्यजादौ नुमागमः । जम्भयति अजजम्भत् ॥

जम्भः—दन्तविशेषोऽभ्यवहार्यं च शोभनो जम्भोऽस्यास्तीति सुजम्भा—'जम्भासुहरिततृणसोमेभ्यः' इति स्वाद्यादेर्जम्भान्तात् बहुव्रीहेरनिचि सर्वनामस्थाने चासम्बुद्धौ' इति नान्तस्योपधाया दीर्घः । पदत्वे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः । भसंज्ञायां 'अल्लोपोऽनः' इत्यल्लोपः—सुजम्भ्नः इत्यादि ॥ ङौ तु 'विभाषा ङिश्योः' इति विकल्पित इति सुजम्भ्नि, सुजम्भनि इति भवतः । सम्बुद्धौ 'न ङि सम्बुद्ध्योः' इति नलोपनिषेधः । नपुंसके तु 'वा नपुंसकानाम्' इति पक्षे नलोपः अन्यत्र तु नित्यः । दीर्घस्तु न भवति असर्वनामस्थानत्वात् । शौ सर्वनामस्थानपरत्वात् सुजम्भानि इति । विभाषा ङिश्योः' इति श्यामल्लोपविकल्पनात् सुजम्भ्नी सुजम्भनी इति भवतः ।

यान्तु 'ऋन्नेभ्य' इति ङीपः 'अनो बहुव्रीहेः' इति निषिद्ध-

त्वात् पुंसीव रूपम् । यदा तु 'डाबुभाभ्यामन्यतरस्याम्' मन्नन्तात्प्रातिपदिकात् अन्नन्ताद्बहुव्रीहेश्च डाबिति डाप् तदा डित्त्वाट्टिलोपे सुजम्भा सुजम्भे इत्यादि । अत्र ङीप्प्रतिषेधस्य डापश्च वचनद्वयप्रामाण्यादेव सिद्धौ अन्यतरस्याङ्ग्रहणेन भिन्नेन योगेन ङापि ऽप्यनुज्ञानात् सुजम्भीत्याद्यपि भवति । अत्र च योगे 'अनो बहुव्रीहेः' इत्येवानुवर्तते, न तु 'मनः' इति । तेन सीमादेः प्रातिपदिकात् ङीब्भावः । सुजम्भीत्यादौ* तु अन्नन्तबहुव्रीहित्वाद्भवत्येव । सुपर्वा, सुशर्मेत्यादौ तु 'अन उपधालोपिनोऽन्यतरस्याम्' इति नियमान्न भवति । सिद्धे सत्यारभ्यमाणोऽयं नियमार्थः—यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेति । अत्र ह्यल्लोपो 'न संयोगाद्वमन्तात्' इति निषिद्ध्यते । वमन्तात् संयोगात् भसंज्ञानिमित्ते प्रत्यये परे अल्लोपो नेति सूत्रार्थः । 'जम्भासुहरिततृण' इत्यत्र जम्भेति भाविना समासान्तेन निर्देशात् समासार्थादुत्तरपदादकृते एव समासे समासान्ता इत्ययं पक्षो ज्ञाप्यते । तेन द्विपुरीत्यादि सिद्ध्यति । यदि ह्यत्र 'ऋक्पूरब्धूः' इत्यकारः समासे कृते स्यात्, तदा समासस्य अकारान्तोत्तरपदत्वाभावात् 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रिलिङ्गता न स्यात् ।।

जम्भते । जजृम्भे । जृम्भिता । इत्यादि ।।

यङ्यङ्लुकोः 'रीगृत्वतः' इति वचनात् रुग्रिग्रीको भवन्ति जरीजृम्भ्यते । जरीजृम्भीति इत्यादि ।।

जृम्भयति । अजजृम्भत ॥

---

* सुसीम्नीत्यादौ ।

जभि : विनाशनार्थः चुगदौ ।। भाषार्थोऽयं* परस्मैपदिष्वपीति केचित् ।।

शल्भ कत्थने ।। ३९० ।।

शल्भते । शशल्भे । शल्भिता । इत्यादि ।।

वल्भ भोजने ।। ३९१ ।।

दन्त्योष्ठ्यादिः । वल्भते । ववल्भे ।।
णौ निगरणार्थत्वान्नित्यं परस्मैपदं— वल्भयति ।।

गल्भ धार्ष्ट्ये ।। ३९२ ।।

गल्भते । प्रगल्भः ।।

अवगल्भ इवाचरति अवगल्भते— आचारेऽवगल्भ ' इति क्विप् । तत्सन्नियोगेनाकारस्यानुदात्तत्वानुनासिकत्वप्रतिज्ञानं प्रागेवोक्तमित्यनुदात्तेत्त्वात्तङ् । क्विपोऽभावे क्यङि अवगल्भायते ।।

अवगल्भेति विशिष्टग्रहणात् अनुपसृष्टादन्योपसृष्टाच्च आचारक्विपि गल्भति प्रगल्भति इति भवति ।।

श्रम्भु प्रमादे ।। ३९३ ।।

तालव्योष्मादिः । एवं काश्यपः । दन्त्यादिरिति चन्द्रः । स्वामी चैवं पठित्वा मतान्तरेण स्रम्भ्स्वति दन्त्यान्त्यत्वमप्याह । मैत्रेयस्य त्वयमेव पक्षः । यदाह—" ससंयोगान्तसाधर्म्येण सान्तोऽप्यत्र निर्दिश्यते । द्युतादावप्ययं पठिष्यते । तस्यैव च ध्वंसुसाहचर्यात् नीगित्याहुः । दत्वे पुनरसाहचर्यमिच्छन्ति " इति । दैवेऽप्येवमेवोक्तम् । तत्र

---

* लाभार्थोऽयं ।

तावदयं पक्षो वृत्तितद्व्याख्याकृतामनभिमत इव प्रतीयते । यद्दत्व-सूत्रे उभयोर्ग्रहणम्, नीक्सूत्रे नास्येति चाहुः । सति ह्येवमवश्य-वक्तव्यम् । तथैव स्वामिचन्द्रयोरपि पाठोऽनभिमत इव । यत् 'वौ कषलसकत्थस्रम्भः' इत्यत्र स्रम्भु विश्वास इति वदन्नमुं नोपाददत वृत्तिकारः, अग्रहणे कारणं न चाचष्ट । तथा व्याख्या-कृतोऽपि न वृत्तिकारवचनमुपलक्षणमाचक्षत, नाप्यग्रहणे कारणम् ।

स्रम्भते । शस्रम्भे । स्रम्भिता । इत्यादि ॥

स्रम्भित्वा, स्रब्ध्वा— उदित्त्वादिड्विकल्पः, 'न क्त्वा सेट्' इत्य-कित्त्वान्नलोपाभावः ॥

स्रब्धः—'यस्य विभाषा' इत्यनिट्त्वम् ॥

ष्टुभु स्तम्भे ॥ ३९४ ॥

स्तोभते । तुष्टुभे । स्तोभिता । इत्यादि ॥

तुस्तुभिषते । तुस्तोभिषते ॥ स्तुभित्वा, स्तोभित्वा—'रलो व्युपधात्' इति वा कित्त्वम् । उदित्त्वात्पक्षे क्त्वायां इडभावे स्तुब्ध्वा इति । 'निष्ठा' इति निष्ठायां 'यस्य विभाषा' इति स्तुब्धम् ॥ सनि—'स्तौतिण्योरेव' इत्यषत्वम् ॥ निष्टोभिता, नि-ष्टोब्धा । 'उपसर्गात्सुनोति' इत्यादिना 'प्राक्सितादड्व्यवायेऽपि' इति च षत्वम् ॥ नितुस्तोभिषते इत्यत्राभ्यासेन व्यवायात् अस्थादित्वाच्च 'स्तौतिण्योरेव' इति नियम एवावतिष्ठते ॥

अनुष्टुप्—पूर्ववत् षत्वम् ॥

त्रिष्टुप्—'सुषामादिषु च' इति षत्वम् ॥

अनुष्टुबेवानुष्टुभम्—एवं त्रिष्टुबेव त्रैष्टुभम् । 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थे उपसङ्ख्यानम्' इति स्वार्थे उत्सादिभ्यः प्राग्दी-व्यतीयोऽञ् । स्वार्थेऽपि प्राग्दीव्यतीयः ॥

तिप्यादय उदात्ता अनुदात्तेतः तिपिवर्जम् ।।

**गुपू रक्षणे ।। ३९५ ।।**

एतदादयः शुम्भान्ता उदात्ता उदात्तेतः ।

'गुपूधूपविच्छिपणिपनिभ्य आयः' इत्यायप्रत्ययः स्वार्थे 'आयादय आर्धधातुके वा' इत्यार्धधातुके विषये विकल्पेनायमुत्पाद्यते । तस्मिन् लघूपधगुणः । आयादयः आय ईयङ् णिङ्च । 'सनाद्यन्ता धातवः' इति धातुत्वे—गोपायति । गोपायाञ्चकार । कास्प्रत्ययादित्याम् ।।

गोपायिता । गोपायिष्यति । गोपायतु । अगोपायत् । गोपायेत् । आशिषि गोपाय्यात् । अगोपायीत् । अगोपायिष्टाम् । अगोपायिष्यत् ।।

जुगोपायिषति ।।

गोपाययति । अजुगोपायत् । सर्वत्रार्धधातुके अतो लोपः अत एव अग्लोपित्वात् 'णौ चङि' इति ह्रस्वाभावः ।

गोपाय्यम्—अचो यत् ।।

गोपायितः । गोपायित्वा ।।

गोपाया—'अ प्रत्ययात्' इत्यकारः ।।

आयाभावे—जुगोप जुगुपतुः । जुगोपिथ, जुगोप्थ । जुगुपिव, जुगुप्व । ऊदित्त्वादिड्विकल्पः । यावान् कश्चिदिडभावः प्रतिषेधनिबन्धनो वा विकल्पनिबन्धनो वा सर्वः क्रादिसूत्रेण नियम्यते इति मैत्रेयः सेधतावाह । तन्मते नित्यमिटा भाव्यम् ।

क्रादिनियमः प्रतिषेधविषय इति वादिनां हरदत्तादीनां विकल्प एव । आयादीनामुत्पत्तिविकः इत्युक्तम् निवृत्तिविकल्पे हि प्रत्ययलक्षणेन प्रत्ययान्तधातुत्वात् गोपाञ्चकारेति स्यात् ॥

गोपिता, गोप्ता । गोपिष्यति, गोप्स्यति ॥

गुप्यात् — 'किदाशिषि' इति कित्त्वान्न गुणः ॥

अगौप्सीत्, अगोपीत् । अगोपिष्यत्, अगोप्स्यत् ।

जुगुप्सति, जुगुपिषति, जुगोपिषति ॥

गुप्त्वा, गुपित्वा, गोपित्वा । 'रलो व्युपधात्' इति क्त्वा-सनोः कित्त्वविकल्पः ॥ सनि अनिट्पक्षे—'हलन्ताच्च' इति कित्त्वम् ॥

जोगुप्यते । आयान्तस्यानेकाच्त्वान्न यङुदाहृतः । आयोत्पत्तिविकल्पस्य यङपि प्रयोजनम् । नात्र यङो लुगस्ति । यदा 'आयादय आर्धधातुके वा' इति आर्धधातुकव्यक्त्यभिव्यक्तावेवायं विकल्प उच्यते । लुकि हि तेन विषयत्वापहागन्नार्धधातुकव्यक्त्य-भिव्यक्तिरिति कथमायाभावस्स्यात् । उपपादितश्चायं प्रकारः 'अज गतिक्षेपणयोः' इत्यत्र ॥

गोपयति । अजूगुपत् ॥

गुप्तः—'यस्य विभाषा' इति नेट उत्पत्तिः । गुप्तिः— तितुत्र' इति नेट् । उत्पत्तिविकल्पस्य चेदं प्रयोजनम्, अन्यथा प्रत्ययान्तत्वादकार एव स्यात् ।

गोप्यम्—ण्यत् ।

कुप्यम् —'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः' इति क्यपि गुपेरादिकत्वं निपात्यते ॥

अयं भाषार्थोऽश्च रक्षणार्थं चुरादौ । गुप गोपन इतीहैवाग्रे । गुप व्याकुलत्वे इति दिवादौ ।।

धूप सन्तापे ॥ ३९६ ॥

अस्यापि पूर्ववदायस्तदभावश्च । धूपायति । धूपायाञ्चकार । धूपिता इत्यादि । आयाभावे वलादौ सर्वत्र नित्यमिडस्य विशेषः । रलो व्युपधादिति कित्त्वविकल्पस्याप्यत्र न प्रयोजनम्, अलघूपधत्वात् । आयाभावेऽपि नास्य क्तिनस्ति, गुरुमत्त्वात् । तेन धूपा इत्यकार एव भवति ।।

भाषार्थेऽयं चुरादौ ।।

जप जल्प व्यक्तायां वाचि ।। ३९७-६९८ ।।

जप मानसे च ।। ३९९ ।।

जल्पति । जजल्प । जल्पिता इत्यादि ।।

जल्पाकः—'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' इति ताच्छील्यादौ षाकन् । षित्त्वात् स्त्रियां जल्पाकी ।।

जल्पति पुत्रं देवदत्तः । जल्पयति पुत्रं देवदत्तं यज्ञदत्तः—'जल्पत्यादीनामुपसङ्ख्यानम्' इति प्रयोज्यस्य अशब्दकारकत्वेऽपि कर्मत्वम् ।।

जपति । जजाप । जेपतुः । जपिता ।।

अजपीत्, अजापीत्—'अतो हलादेः' इति वा वृद्धिः । जिजपिषति ।

जञ्जप्यते—'लुपसद' इत्यादिना भावगर्हायां यङ् 'जपजभ' इत्यादिना अभ्यासस्य नुक्यनुस्वारे परसवर्णविकल्पो जभिवत् ॥

जञ्जपीति, जञ्जप्ति ॥

जापयति । अजीजपत् ॥

जप्यम्—'पोरदुपधात्' इति यत् ॥

कर्णेजपः—'स्तम्बकर्णयो रमिजपोः' इति यथासङ्ख्यं, जपेः कर्णे सुबन्ते उपपदे अच् । अयं च 'हस्तिसूचकयोः' इति वचनात् सूचकविषयः । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् ॥

जञ्जपूकः—'यजजप' इति यङन्तात् तच्छीलादावूकप्रत्यये 'अतो लोपः' 'यस्य हलः' इति अल्लोपयलोपौ ॥

जपः—'व्यधजपोरनुपसर्गे' इत्यप् ॥ उपसृष्टात्तु घञि उपजापः ॥

अनयोः कर्मव्यतिहारे न तङस्ति, 'प्रतिषेधे हसादीनामुपसङ्ख्यानम्' इत्युक्तत्वात् ॥

**चप सान्त्वने ॥ ४०० ॥**

चपति । चचाप । चेपतुः । चपिता इत्यादि । जपिवत् ॥

चापः वृक्ष इति मैत्रेयः । वेणुविशेष इति दण्डनाथः । तस्य विकारः चापः—'तालादिभ्योऽण्' इति विकारावयवयोरण् ॥

**षप समवाये ॥ ४०१ ॥**

समवायस्सम्बन्धः सम्यगवबोधो वा । सपति इत्यादि । जपिवत् ॥

सिसपिषति—'स्तौतिण्योरेव' इत्यषत्वम् ॥

सापयति । असीषपत् ॥

सप्तिः—'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् ।

सप्त—'सप्यशूभ्यां तुट् च' इति कनिन् प्रत्ययः, तुडागमश्च । पञ्चन्शब्दवत् षट्संज्ञा तत्कार्यं च ॥

सप्तानामपत्यं साप्तिः—'बाह्वादिभ्यश्च' इति ञि 'नस्तद्धिते' इति टिलोपः । अत्र शाकटायनः क्षीरस्वामी च सचति* चाहुरि युक्त्वा सचति सचिव इत्यप्याहतुः† ॥

**रप लप व्यक्तायां वाचि ॥ ४०२-४०३ ॥**

रपति । लपति इत्यादि जपिवत् ॥

विलापयति पुत्रम् इत्यत्र जल्पत्यादित्वात् प्रयोज्यस्य कर्मत्वम् ॥

अलीलपत्, अललापत्—काण्यादित्वादुपधाह्रस्वविकल्पः ॥

राप्यं, लाप्यं—'आसुयुवपिरपिलपित्रपि' इति ण्यत् यतोऽपवादः । अत एव जमतिना समानार्थत्वेऽपि पृथङ्निर्देशः

रिपुः—'रपेरिच्चोपधायाः' इत्युप्रत्यय उपधाया इकारः ॥

**चुप मन्दायां गतौ ॥ ४०४ ॥**

चोपति । चुचोप । चोपिता ॥

चुचुपिषति, चुचोपिषति ॥ चुपित्वा, चोपित्वा—'रलो व्युपधात्' इति कित्त्वविकल्पः ॥

चोचुप्यते ॥ चोचुपीति, चोचोप्ति ॥

---

* सचेति । † इत्यप्याह ।

चोपयति । अचूचुपत् ॥

चोपनः—चलनार्थत्वात् युच् । णौ नित्यं परस्मैपदं च ॥

गले चोप्यते गलेचोपकः—'कृत्यल्युटो बहुलम्' इति बहुलवचनात् ण्यन्तादस्मात् कर्मणि ण्वुल् । 'कर्तृकरणे कृता बहुलम्' इति बहुलवचनात् सप्तम्यन्तस्यापि समासः । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनादलुक् । 'अमूर्धमस्तकात्स्वाङ्गादकामे' इति वा ॥

उदुपधत्वात् भावादिकर्मणोर्निष्ठायां वा कित्त्वे—चुपितम् अनेन । चोपितम् अनेन इत्यादि ॥

चुप्रम्—ऋज्रेन्द्रादौ रकि निपातितः ॥

'स्वरेण नीचेन शपिं छुपिं क्षिपिम्' इत्यनिट्कारिकापाठो द्वितीयादेरिति तत्र तौदादिकस्य, 'छुप संस्पर्शने' इत्यस्यैव ग्रहणम्, न त्वस्य ॥

## तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ हिंसार्थाः ॥ ४०५-४१२ ॥

तोपतीत्यादि । चुपिवत् ॥

तुम्पति । तुतुम्प । तुतुम्पतुः—संयोगान्तत्वाल्लिटो न कित्त्वम् ॥

तुम्पिता । तुम्पिष्यति । तुम्पतु । अतुम्पत् । तुम्पेत् । आशिषि—तुप्यात् । 'किदाशिषि' इति कित्त्वात् 'अनिदिताम्' इति नलोपः ॥

अतुम्पीत् । अतुम्पिष्यत् ॥

तुतुम्पिषति ॥ तोतुप्यते ॥ तोतुम्पीति, तोतुम्प्ति । तोतुप्तः ॥

तुम्पयति । अतुतुम्पत् ॥

प्रस्तुम्पति गौः—'प्रात्तुम्पतौ गवि कर्तरि' इति सुट् तुम्पतेः । तुम्पताविति धातुनिर्देशो न तिङन्तानुकरणमिति प्रस्तुम्पः, प्रस्तुम्पकः, इत्यादि च भवति । प्रतोतुम्पतीत्यादावत एव श्तिपा निर्देशान्न भवति ॥

त्रोपति ॥ त्रुम्पति ॥ तोफति ॥ तुम्फति ॥ त्रोफति । त्रुम्फति ॥ इत्यादि तुपितुम्पिवत् ॥

तत्र अरेफसरेफयोः सानुषङ्गयोः द्वितियान्तयोः सेटः क्त्वो 'नोपधात्थफान्ताद्वा' इति कित्त्वविकल्पनात् पक्षे नलोपे तुफित्वा । तुम्फित्वा । त्रुफित्वा । त्रुम्फित्वा इति भवति ।

अरेफाश्चत्वारः तुदादावपि । आद्यस्तु चुरादावपि । तत्र त्वर्दनमर्थः ॥

## पर्प रफ रफि अर्व पर्व लर्व बर्व मर्व कर्व खर्व गर्व शर्व षर्व चर्व गतौ ॥ ४१३-४२३ ॥

आद्यः प्रथमान्तः । परौ द्वावपि द्वितीयान्तौ । एकादश परे तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रेफोपधाः । पर्पति । पपर्प । पर्पिता इत्यादि ॥

पर्प्यतेऽनेनेति पर्पः—येन पीठेन पङ्गवश्चरन्ति स उच्यते । 'हलश्च' इति घञ् ॥

पर्पेण चरति पर्पिकः—'पर्पादिभ्यष्ठन्' इति तृतीयान्ताच्चरत्यर्थे ठन् ॥ षित्त्वात् स्त्रियां पर्पिकी ॥

रफति ॥ रम्फति ॥ अर्बति । आनर्ब ॥ पर्बति ॥ लर्बति । बर्बति ॥ मर्बति ॥ कर्बति ॥ खर्बति ॥ गर्बति ॥ शर्बति ॥ सर्बति । असिषर्बत् ॥ चर्बति ॥

अर्बादयो नोपधा इति कौशिकः ॥

कुबि छादने ॥ ४२७ ॥

कुम्बतीत्यादि ॥

कुम्बा—गुरुमत्त्वादकारः । 'चिन्तिपूजिकथिकुम्बि' इत्यङ्विधौ चौरादिकस्य ग्रहणम् ॥

लुबि तुबि अर्दने ॥ ४२८-४२९ ॥

लुम्बति । तुम्बतीत्यादि ॥

तुम्बी—अलाबूः । गौरादित्वात् ङीष् ॥

चुबि वक्त्रसंयोगे ॥ ४३० ॥

चुम्बतीत्यादि । लुम्ब्यादयः त्रयः चुरादौ ॥

षृभु षृम्भु शृभु हिंसार्थाः ॥

अत्र मैत्रेय एवं पठित्वा 'षिभु षिम्भु' इत्येके इति ऋकारस्य स्थाने इकारमप्याह । तरङ्गिण्यां तु ऋकारवन्तौ दन्त्यादी पठित्वा षोपदेशपर्युदासे सृग्रहणेन अनर्थकस्यापि ग्रहणमित्युक्तम् । सर्भति । ससर्भ । सर्भिता इत्यादि ॥

सिषर्भिषति । मैत्रेयपाठे 'स्तौतिण्योरेव' इत्यषत्वम् ॥

सरीसृभ्यते । सरीसृभीति, सरिसृभीति, सरृसृभीति ।

सरीषर्ब्धि, सरिषर्ब्धि, सर्षर्ब्धि ॥

सर्भयति । अससर्भत्, असीषृभत् ॥ उर्कद्दा ॥

सिषर्भयिषति । तरङ्गिणीमते तु षत्वं न भवति ॥

सर्भित्वा, सृब्ध्वा—उदित्त्वादिड्विकल्पः ॥

सृब्धम्—'यस्य विभाषा' इत्यनिट्त्वम् ॥

सृभ्यम्—ऋदुपधत्वात् क्यप् ॥

सृम्भति । ससृम्भ ॥ ससृभतुः । नलोपः क्ङितोः ॥

इकारवत्पाठपक्षे सेभति । सिम्भति इत्यादि ॥

**शुभ शुम्भ भाषणे हिंसायां च ॥ ४३५-४३६ ॥**

द्वाविमौ देवमैत्रेयादयः पठन्ति । स्वामी तु निरनुषङ्गं न पपाठ ॥ इदमेवात्रेयस्यापि मतम्, तुदादौ 'शोभति इति शपि' इति वचनात् ॥

दुर्गस्तु भासन इत्यस्यार्थमाह । एवं धनपालशाकटायनौ ॥

गुप्तस्तु—'सावष्टम्भनिषुम्भसम्भ्रमनमद्भगोलम्' इत्यादिदर्शनात् मूर्धन्यादित्वमाह ॥

शोभति । शुम्भति इत्यादि । तोपतितुम्पतिवत् ॥

शुभम्— इगुपधलक्षणः कः ॥

शुभ्रम्—'स्फायितञ्चि' इत्यादिना रक् ॥ इमौ शोभार्थौ तुदादी । निरनुषङ्गस्त्वग्रे च दीप्तौ तङि । गुपादय उदात्ता उदात्तेतः ॥

**अथ अनुनासिकान्ताः.**

**घिणि घुणि घृणि ग्रहणे ॥ ४३७-४३९ ॥**

एतदादयः कम्यन्ताः उदात्ता अनुदात्तेतः ॥

घिण्णते । जिघिण्णे । घिण्णिता । घिण्णिष्यते । घिण्णताम् । अघिण्णत । घिण्णेत । आशिषि—घिण्णिषीष्ट । अघिण्णिष्ट । अघिण्णिष्यत ॥

जिघिण्णिषते । जेघिण्यते । जेघिण्णीति । जेघिण्टि । लङि अजेघिन् । घिण्णयति । अजीघिण्णत् ॥ घिणितम्— सर्वत्र नुमः ष्टुत्वम् ।

यङ्लुकि लङि संयोगान्तलोपस्यासिद्धत्वात् नकारान्तत्वम् ॥

एवं घुण्णते । घृण्णते इत्यादि ॥

जरीघृण्यते—'रीगृत्वतः' इति रीक् । जरीघृण्णीति, जरिघृण्णीति जरघृण्णीति । इत्यादि ॥

अजरघृन्—इत्यत्र संयोगान्तलोपस्यासिद्धत्वान्न गुणः । 'पदान्तस्य' इति णत्वं न ॥

घुण घूर्ण भ्रमणे ॥ ४४०-४४१ ॥

घोणते । जुघुणे । घोणिता ॥

जुघुणिषते जुघोणिषते । घुणित्वा, घोणित्वा । 'रलो व्युपधात्' इति कित्त्वविकल्पः ॥

जोघुण्यते । जोघुणीति, जोघुण्टि ॥

जोघूण्ट—इत्यादौ अनुनासिकान्तत्वात् 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घ उपधायाः । झलीति क्ङितोर्विशेषणम् ॥

घोणयति । अजूघुणत् ॥

उदुपधत्वाद्भावादिकर्मणोः, घुणितमनेन घोणितमनेन इत्यादि ।।

घोणा—क्रोडादिनिपातनात् अचि टाप् । कल्याणघोणा—अत्र 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति उपसर्जनसंयोगोपधस्वाङ्गान्ताद्बहुव्रीहेः वा ङीष्. इति प्राप्तस्य ङीषः 'न क्रोडादिबह्वचः' इति निषेधः । अयं ङीष् क्रोडाद्यन्ताद्बह्वजन्ताच्च नेत्यर्थः । घूर्णत इत्यादि ।।

यङ्लुकि लङि अजोघूण् 'रात्सस्य' इति नियमात्संयोगान्तलोपाभावः ।।

इमौ तुदादौ परस्मैपदिनौ ।

**पण व्यवहारे स्तुतौ च ।। ४४२ ।।**

**पन च ।। ४४३ ।।**

पृथङ्निर्देशात् स्तुतावित्यनेनैवायं सम्बध्यते ।

शतस्य पणते । शतं पणते —'व्यवहृपणोस्समर्थयोः' इति कर्मणि शेषे षष्ठी । अन्यदा द्वितीयैव । समर्थयोरिति समानार्थयोरित्यर्थः । शकन्ध्वादित्वात् समशब्दाकारस्य पररूपम् । द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः ।।

पेणे । पणिता । पणिष्यते । पणताम् । अपणत । पणेत । पणिषीष्ट । अपणिष्यत ।।

पिपणिषते ।।

पम्पण्यते—'नुगतोऽनुनासिकान्तस्य' इति नुक् ।।

पम्पणीति । पम्पण्टि । पम्पाण्टः—'अनुनासिकस्य क्विझलोः' इति दीर्घः ।।

अपीपणत्। पाणयति अपीपणत्।

पण्यम्—'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' इति पणितव्ये व्यवहर्तव्ये निपातितः। अन्यत्र ण्यति—पाण्यम्॥

मूलकपणः। शाकपणः—यः संव्यवहाराय मूलकादीनां परिमितो मुष्टिः बध्यते स उच्यते। 'नित्यं पणः परिमाणे' इति परिमाणे गम्यमाने अप्प्रत्ययः। अन्यत्र घञि—पाणः। व्यावहारिकोऽप्युन्मानलक्षणपरिमाणयोगात् पण उच्यते—'सपणश्चेद्विवादस्स्यात्' इत्यादौ। इद दास्यामीति पणनस्य परिच्छेदनात्पणोक्तिः॥

अध्यर्धपण्यम्, द्विपण्यम्—'पणपादमाषशतात्' इति अध्यर्धपूर्वात् प्रातिपदिकात् पणाद्यन्तात् द्विगोश्च अर्हीयेष्वर्थेषु यत्।

एत्यात्र आपणत इति आपणः—'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च' इत्यधिकरणे घान्तो निपातितः॥

पणितम्॥

क्विपि—पाण्—'अनुनासिकस्य' इति दीर्घः।

वणिक्—'पणेरिज्यादेश्च वः' इति इजिप्रत्ययः पकारस्य च वकारः।

वणिजो भावो वणिज्या। 'दूतवणिग्भ्यां च' इति यः। यद्यप्ययं भावकर्माधिकारे, तथाऽपि स्वभावाद्भावे स्त्रियां च। वाणिज्यम् इति 'प्रज्ञादिभ्यश्च' इत्यणन्तात् वाणिजशब्दात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ब्राह्मणादेराकृतिगणत्वात् ष्यञि। 'कर्मणि च' इति चकारेण भावस्समुच्चीयते।

विविधमत्र पणन्त इति विपणिः—'इन्' इतीन्॥

पणसम्—पण्यपर्यायः—'अत्यमिचमितमिनमिरभिलभिनभितपिपतिपणिपनिमहिभ्योऽसच्' इत्यसच् । 'गुपूधूप' इत्यादौ व्यवहारार्थस्य नेत्युक्तान्युदाहरणानि तद्विषयाणि । तथा च वृत्तिः—'स्तुत्यर्थेन पनिना साहचर्यात्तदर्थः पणिः प्रत्ययमुत्पादयति' इति । एवं न्यासपदमञ्जर्यादिष्वपि । अत एव तरङ्गिण्यामपि—'न चोपलेभे वणिजां पणाया' इति प्रयुञ्जानो भट्टिर्भ्रान्त इत्युक्तम्

पणायति राजानम् । पणायाञ्चकार । पणायितेत्यादि । आर्धधातुकविवक्षायामायानुत्पत्तौ उक्तान्येवोदाहरणानि ।।

अत्र गुपादिवत् आयोत्पत्तिविकल्पस्य प्रयोजनं पेणे इत्यादि-सिद्धिः । पणाञ्चकारेत्यादिनिवृत्तिश्च । निवृत्तिविकल्पे हि प्रत्ययलक्षणेन प्रत्ययान्तत्वादाम्स्यात् । एवमन्यान्यपि प्रयोजनानि गुपिवन्नेयानि ।।

अत्र स्वामिकाश्यपसम्मताकारवासुदेवादयः पणायत इत्यायान्तादात्मनेपदमुदाहरन्ति, तदसत्—यदस्यानुदात्तेत्त्वं व्यवहारार्थस्यायाभावात् स्तुत्यर्थस्यार्धधातुके आयविकल्पनात् प्रकृतावेव चरितार्थम् । अवयवे चाचरितार्थं लिङ्गं समुदायस्य विशेषकं, यथा-जुगुप्सत इति । स्पष्टं चैवं 'गुपूधूप' इत्यत्र न्यासपदमञ्जर्यादिषु । अत्र क्षेमेन्द्रन्यासे पणतेः सार्वधातुकेप्यायविकल्प उक्तः । तथा सुधाकरकाश्यपतरङ्गिणीकाराश्च विच्छेस्तुदादिपाठलिङ्गात् सार्वधातुकेऽपि विकल्पमाहुः । नित्ये ह्याये विच्छायतीति शपापि सिद्ध्यति इति किं तत्र पाठेन । न चास्ति स्वरभेदः—शे कृते प्रत्ययस्वरेण तस्योदात्तत्वे धातुर्वर्ज्यमानस्वरेणानुदात्तः । शपि तु तस्य पित्त्वेनानुदात्तत्वात् 'धातोरन्तः' इति धातुरन्तोदात्तः ।

तत्र—' एकादेश उदात्तेनोदात्तः ' इत्युभयथापि विकरणान्तस्या-न्तोदात्तत्वात् । अनेनैवाभिप्रायेण ' च्छ्वोः शूट् ' इत्यत्र न्यासे गां विच्छतीति गोविडित्युक्तम् । नैतत्सारं, विच्छायती विच्छायन्तीति ' आच्छीनद्योः ' इति नुम्विकल्पस्य प्रयोजनस्य सम्भवात् । शपि तु ' शप्श्यनोर्नित्यम् ' इति नित्यो नुम् स्यात् । ' गुपूधूपविच्छि ' इत्यत्र कैयटपदमञ्जर्यादिष्वप्येवमेव स्थितम् । विच्छ गतौ इत्यत्रात्रेयमैत्रेयाव-प्येवमेवाहतुः । तथा देवोऽपि—' विच्छेरये शतुर्वा नुम् शे स्यादिति तुदादिता ' इति । अत्र—पुरुषकारे तुदादौ विच्छिः पठ्यते, न तु विच्छायतिरिति विच्छेरेवानन्तरेण शेन भाव्यम् । न चैवं भवन्नायवि-कल्पस्य कल्पकः स्यादेव । अत्रैव ' आयादय आर्धधातुके वा ' इत्यत्र न्यासान्तरम् ' आयादयः शपि नित्यम् ' इति भाष्यं चानुकूलम् । नित्ये विच्छेराये शब्ग्रहणं शित उपलक्षणमिति कल्प्यं स्यादिति सुधाकराद्युक्तमेव समर्थितम् ॥

नायं भाष्यस्यार्थः—तत्र हि परसप्तमीत्वमाश्रित्य सूत्रं दूषयित्वा तत्परिहाराय ' सार्वधातुके नित्यम् ' इत्यभिहिते तत्राप्यायेनानवकाशेन विकरणानां बाधदोषमुद्भाव्य तत्परिहारायैव यथापुनर्ग्यं सूत्रभेदेन परिहारः । यदि पुनः शपि नित्यमित्युच्येत तदा सिद्ध्यतीत्युक्तम् । तेनापि न्यासेन सार्वधातुके नित्यमित्यनेन समानफलेन भाव्यम् । तच्च शब्ग्रहणस्य शित उपलक्षणत्व एव युज्यते अतश्चोपलक्षणत्वमेवैष्टव्यम् । यत्तत्र यथान्यास-मेवास्तु इति सूत्रमेव विषयसप्तम्याश्रयणेन सिद्धान्तितम् । अत एव च तत्र कैयटेन तौदादिकाद्विच्छेः शेन भाव्यम्, न तु शपा, एवं तर्हि न्यासभेदोपलक्षणार्थमिदं, शिति नित्यमिति न्यासः कर्तव्य इत्युक्तम् ॥

यदप्युक्तं पुरुषकारे—'तुदादिभ्यः शः' इति हि शो विधीयते न तु विच्छायेः, विच्छेरेव तुदादिषु पाठात्। तच्चैतद्विच्छेः शविधानमाये नित्ये सति आयान्ताद्भवत्वपरिक्लिश्यत इति; तदपि सूत्रस्वभावादाये नित्ये सति गुपादिष्वनुबन्धकरणवत् विच्छेः पाठोऽपि समुदायार्थतया युज्यत इति न सङ्कटम्। तथा च हरदत्तः—विच्छिरयं तुदादौ पठ्यते। तत्सामर्थ्यात् आयप्रत्ययान्तादपि शविकरणो भवति, न तु शप्। यथा जुगुप्सते इत्यात्मनेपदम्। तेन विच्छायती विच्छायन्तीति 'आच्छीनद्योः' इति नुम्विकल्पो भवतीति॥

पनायतीत्यादि। पणिवत्॥

पनसः—'अत्यमि' इत्यादिना असच्॥

भाम क्रोधे॥ ४४४॥

भामते। बभामे। भामिता। इत्यादि॥

बिभामिषते। बाभाम्यते। बाभामीति, बाभान्ति। बाभान्मि। बाभान्वः। बाभान्मः। 'नुगतः' इति तपरकरणात् यङ्यङ्लुकोरभ्यासस्य न नुगागमः। 'म्वोश्च' इति मकारान्तस्य धातोर्नकारादेशो भवति मकारवकारयोः परत इति मकारस्य नकारः॥

लङि—अबाभान्—'मो नो धातोः' इति नकारः। पदस्येति शेषः॥

एवं क्विप्यपि भान्॥

भामः क्रोधः सोऽस्या अस्तीति भामिनी॥

देवदत्ताय भामते इत्यत्र—'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति

कोपः ' इति कोपविषयत्वेन देवदत्तस्य सम्प्रदानत्वम् । अमर्षः क्रोधः । अपकारो द्रोहः । अक्षमा ईर्ष्या । गुणेषु दोषाविष्करणमसूया ॥

क्षमूष् सहने ॥ ४४५ ॥

क्षमते । चक्षमे ॥

चक्षमिषे, चक्षंसे । चक्षमिध्वे, चक्षन्ध्वे । चक्षमिवहे, चक्षण्वहे । चक्षमिमहे, चक्षण्महे । ऊदित्त्वात्सर्वत्र वलाद्यार्धधातुके इड्विकल्पः । अनिट्पक्षे ' म्वोश्च ' इति नत्वे ' रषाभ्याम् ' इति णत्वम् ॥

क्षमिता, क्षन्ता । क्षमिष्यते, क्षंस्यते । क्षमताम् । अक्षमत । क्षमेत । आशिषि — क्षमिषीष्ट, क्षंसीष्ट । अक्षमिष्ट, अक्षंस्त । अक्षमिष्यत, अक्षंस्यत ॥

कर्मादौ — क्षम्यते ॥ अक्षमि — ' नोदात्तोपदेशस्य मान्तस्यानाचमेः ' इति चिणि ञ्णिति कृति च वृद्धिनिषेधः ॥

चिक्षमिषते, चिक्षंसते ॥

चङ्क्षम्यते । चङ्क्षमीति, — चङ्क्षन्ति — ' नुगतः ' इत्यभ्यासस्य नुक् ॥

लुङि — ' ह्मयन्त ' इति वृद्धिनिषेधात् — अचङ्क्षमीत् ।

क्षमयति । अचिक्षमत् — ' जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ' इत्यमन्तत्वाण्णौ मित्त्वे ' मितां ह्रस्वः ' इति उपधाया ह्रस्वः ॥

क्षमित्वा, क्षान्त्वा क्षान्तः — ' यस्य विभाषा ' इत्यनिट्त्वम् ॥

क्षामः — घञ् ॥

क्षमकः — ण्वुल् ॥

अपराधक्षमः । अपराधक्षमा—'ईक्षिक्षमिभ्यां च' इत्यणोऽपवादो णः । अणि हि ङीप्स्यात् ॥

क्षमा—'षिद्भिदादिभ्योऽङ्' इति षित्त्वात् स्त्रियामङ् ।

ण्यन्तस्यास्य 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति चिण्णमुल्परे णौ मितामुपधाया दीर्घविकल्पनात्—अक्षमि, अक्षामि । क्षमंक्षमम्, क्षामंक्षामम् इति भवति । 'आभीक्ष्ण्ये णमुल्च' अस्मिन् गम्यमाने समानकर्तृकत्वे पूर्वकालत्वे च णमुलिति णमुल् । चकारः क्त्वासमुच्चयार्थः । 'आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम् । पौनःपुन्यमाभीक्ष्ण्यम् ॥

स्यादिष्वप्ययं दीर्घविकल्पः चिण्वदिट्पक्षेपि भवति । क्षामिष्यते, क्षमिष्यते । अक्षामिषाताम्, अक्षमिषाताम् । क्षामिषीष्ट, क्षमिषीष्ट । क्षामिता, क्षमिता । इत्यादि ॥

चिण्वदिटोऽभावे—क्षमयिष्यते । अक्षमिषाताम् । क्षमयिषीष्ट । क्षमयिता । इति ॥

लुङ्येकवचने चिण्परो णिरिति पक्षे दीर्घो भवति—अक्षमि अक्षामि इति ॥

यङ्लुगन्तादपि णौ चिण्णमुलोश्चिण्वदिटि च अयं दीर्घविकल्पो द्रष्टव्यः—अचङ्क्षामि । चङ्क्षामं चङ्क्षामम्, चङ्क्षमंचङ्क्षमम् । चङ्क्षामिष्यते, चङ्क्षमिष्यते । इत्यादि । अत्राप्यचिण्वत्पक्षे चङ्क्षमिष्यत इत्यादि । अत्र—'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति ह्रस्वविकल्पेनाऽपि दीर्घे सिद्धे दीर्घग्रहणं ण्यन्ताद्यङन्ताच्च णौ चिण्णमुल्परे दीर्घार्थम् । अक्रियमाणेऽस्मिन् णिलोपाल्लोपयोः परनिमित्तयोः पूर्वस्य ह्रस्वविकल्पे कर्तव्ये स्थानि-

वत्त्वान्न चिण्णमुल्परे णौ मिदङ्गमनन्तरमित्यसौ न स्यात्। क्रियमाणे तु दीर्घविधिं प्रति न स्थानवदिति स्थानिवत्त्वं निषिद्ध्यते। नन्वेवमपि दीर्घे कर्तव्ये ण्यल्लोपयोः 'असिद्धवदत्र' इत्यसिद्धत्वात् व्यवधानं दुर्वारम्। नैतत्, व्याश्रयत्वेनासिद्धत्वाभावात्। तथा च वामनः—णौ हि णियङोर्लोपः चिण्णमुल्परे णौ अङ्गस्य दीर्घत्वमिति।

अयमपि दिवादौ ॥

## कमु कान्तौ ॥ ४४६ ॥

'कमेर्णिङ्' इति स्वार्थे णिङ। अयमप्यार्धधातुके विकल्पेनोत्पद्यते। अत्राप्युत्पत्तिविकल्पस्य प्रयोजनं गुपिवद्द्रष्टव्यम्। कामयते। ङित्त्वात्तङ्। कामयाञ्चक्रे। कामयिता। कामयिष्यते। कामयताम्। अकामयत। कामयेत। आशिषि—कामयिषीष्ट ॥

अचीकमत—णिग्रहणेष्वयमपि गृह्यत इति 'णिश्रि' इति कर्तरि चङ्, 'णेरनिटि' इति णिलोपे 'णौ चङि' इति ह्रस्वः।

चिकामयिषते ॥

कामयति—णिङन्ताण्णौ 'णेरनिटि' इति णिलोपः ॥

कामयिता ॥

कामना—'ण्यासश्रन्थः' इति युच् ॥

मांसकामः, मांसकामा—'शीलिकामिभक्ष्याचरिभ्यो णः' इति अणोऽपवादो णः। अणि हि सति स्त्रियां ङीप्स्यात् ॥

णिङभावे—चकमे। कमिता। कमिष्यते। कमिषीष्ट। अचकमत—'कमेरुपसङ्ख्यानम्' इति कर्तरि चङ्।

अक्रमिष्यत ॥

चिक्रमिषते । चङ्क्रम्यते । अत्र यङ्लुङ्नेति 'गुपू रक्षणे' इत्यत्र स्थापितम् । तत्तत एव अवगन्तव्यम् ॥

कामयति—'न कम्यमिचमाम्' इति मित्त्वनिषेधाद्वृद्धिः । 'चिण्णमुलोः' इति दीर्घविकल्पो मिद्विषय इति अस्यामित्त्वात् चिण्णमुलपरेऽपि णौ नित्या वृद्धिः—अकामि । कामं कामम् । इति । तथा चिण्वदिट्यपि मित्त्वाभावात् कामिष्यते इत्यादेव भवति. न तु कमिष्यते इत्यादि । अचिण्वत्पक्षे तु गुणाययोः कामयिष्यते इत्यादि ॥

अस्योदित्त्वमणिङ्पक्षे क्त्वायामिड्विकल्पार्थम् । तेन कमित्वा, कान्त्वा इति । निष्ठायां तु 'यस्य विभाषा' इति निषेधात् कान्तः इति ॥

कामुकः—'लषपत' इत्यादिना उकञ् ॥

कामं कामम्—'नोदात्तोपदेशस्य' इति चिणि ञिति णिति च कृति वृद्धिनिषेधोऽस्य न भवति, तत्र 'अचमिकमिवमीनाम्' इति पर्युदासात् ॥

कामुकी—मैथुनेच्छावती । 'जानपद' इत्यादिना मैथुनेच्छायां ङीष्, अन्या— कामुका ॥

कम्रः—'नमिकम्पि' इत्यादिना रः ॥

कमनः — इति वासरूपेण अनुदात्तेल्लक्षणे युचि ॥

कन्तुः कामः—'अर्जिदृशि' इत्यादिना उप्रत्ययस्तुगागमश्च ॥

कन्तुकम्—'कुमारीक्रीडनकानि च' इति कुमारीक्रीडनकादस्मात् कन् ॥

कंसः—'वृतॄवदिहनिकमिकषिभ्यः सः' इति सः ॥

कंसाय हितं कंसीयम् । 'तस्मै हितम्' इति विषये 'प्राक्क्रीताच्छः' इति छः ॥

तस्य विकारः कांस्यम्—'कंसीयपरशव्ययोर्यञञौ लुक्च' इति यथासङ्ख्यादस्मात् विकारे यञि प्रातिपदिकादित्यधिकारात् ततः परस्य छस्य (यतश्च) लुक् । यञञोस्तु विधानसामर्थ्यान्न भवति ॥

कंसेन क्रीतं कंसिकम्—'कंसाट्टिठन्' इति टिठन् आर्हीयेष्वर्थेषु ॥

टित्त्वात् स्त्रियाम्—कंसिकी ।

घिण्णादय उदात्ता अनुदात्तेतः ॥

**अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण शब्दार्थाः ॥ ४४७ ॥**

इतः क्रम्यन्ता उदात्ता उदात्तेतः ॥

अणति । आण । अणिता ॥

अणिणिषति । आणयति । मा भवानणिणत् ।

अणुः—अल्पो धान्यविशेषश्च । 'अणश्च' 'धान्ये नित्' इत्युप्रत्ययः ॥

अणूनां धान्यानां भवनं क्षेत्रं अणव्यम्, आणवीनम्—'विभाषा तिलमाषोमाभङ्गाणुभ्य' इति षष्ठ्यन्तात् भवने क्षेत्रे यत्, विभाषाग्रहणात् खञ्च । यति 'ओर्गुणः' उवर्णा-

न्तस्य गुणो भवति भसंज्ञानिमित्ते तद्धिते परे इति गुणे 'वान्तो यि' इत्यवादेशः

अणुप्रकारः अणुकः—'स्थूलादिभ्यः प्रकारवचने कन्' इति कन्। प्रकारो भेदः सादृश्यं च। अणुकः सूक्ष्मदृक् 'अणु निपुणे' ति यवादिपाठात्कन्॥

अण्डम्—'ञमन्ताड्डः' इति डः। बाहुलकाड्डाकारस्य नेत्त्वम्॥

अण्डूः—जलतरणिः—'अणो डश्च' इत्यूकार*प्रत्ययो डश्चान्तादेशः॥

रणति। रराण। रेणतुः। रणिता॥

अरणीत्। अराणीत्—'अतो हलादेः' इति वा वृद्धिः। रिरणिषति॥

रंरण्यते। रंरणीति। रंरण्टि। रंराण्टः—'नुगतोऽनुनासिकान्तस्य' इत्यभ्यासस्यानुस्वारः। 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः॥

राणयति। अरीरणत्। अरराणत्। काण्यादित्वात् ह्रस्वविकल्पः॥

रणयतीति गतौ घटादिः॥

रणनं रणः शब्दः॥

रणन्त्यस्मिन्निति रणो यज्ञः, सङ्ग्रामश्च–'वशिरण्योरुपसङ्ख्यानम्' इति अकर्तरि कारके अप्रत्ययः॥

रणितम्॥

---

* अण्डुः—चलसरणि........इत्युकारः

रण्डा— 'अमन्ताड्डः' ॥

रणरणको हृल्लेखः—'घञर्थे कविधानम्' इति कः । 'क्रुञादीनां के द्वे भवतः' इति द्विर्वचनम् । संज्ञायां कन् । पृषोदरादित्वात् हलादिशेषाभावोऽभ्यासस्याकारश्च ॥

वणति । ववाण ववणतुः इत्यादि । वादित्वादेत्वाभ्यासलोपाभावः । अयमपि काण्यादिः ॥

वाणः शततन्तुः वीणा— 'हलश्च' इति संज्ञायां घञ् ॥

वाणी—'इञ्वपादिभ्यः' इतीञन्तात् 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीष् ॥

अन्तर्वाण्यस्येति अन्तर्वाणि: विपश्चित्—'निष्प्रवाणिश्च' इति चकारात् 'नद्यृतश्च इति कपो निषेधः ॥

अवश्यं वणतीति वाणिनी—आवश्यकणिन्यन्तात् ङीप् ॥

वण्डः—पूर्ववड्डः । अल्पतनुः पशुः ॥

भणति । बभाण । भणितेत्यादि । अयमपि काण्यादिः ॥

भण्यते इति भाणः—कर्मणि घञ् ॥

भणितिः—'तितुत्र' इतीण्निषेधे 'तितुत्रेष्वग्रहादीनाम्' इति वचनादिडागमः ॥

भण्डः । भडेर्वा । भाण्डं—'पुच्छभाण्ड इति निर्देशाद्दीर्घः । भामेर्वा डप्रत्यये ॥

सम्भाण्डयते । भाण्डानि सञ्चिनोतीत्यर्थः । 'पुच्छभाण्डचीवराण्णिङ्' इति णिङ् । 'भाण्डात्समाचयने' इति च वृत्तिः । ङित्त्वात्तङ् । समबभाण्डत—'णिश्रि' इति चङ् ॥

मणति । ममाण । मेणतुः । मणितेत्यादि ॥

मणितम् ॥

मणिः—इन्प्रत्ययः ॥

मणिप्रकारो मणिकः—स्थूलादित्वात्कन् ॥

मणिरेव मणिकः—यावादित्वात्कन् ॥

मणिकः—अलङ्कारः—संज्ञायां कन् ॥

मण्डः । मण्डतेर्वा ॥

कणति । चकाण । कणितेत्यादि । अयमपि काण्यादिः ॥

कणयतीति गतौ घटादित्वात् ॥

कणः लेशः, सूक्ष्मतण्डुलश्च । गोचरादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् घः ॥

कणिका—संज्ञायां कनि 'प्रत्ययस्थात्' इतीत्वम् ॥

काण्ठः....कणेष्ठः । बाहुलकाट्टस्येकाभावः ॥

अयं निमीलनार्थश्चुरादौ ॥

क्वणति । चक्वाण । क्वणितेत्यादि ॥

क्वाण, क्वणः, निक्वाणः, निक्वणः, । कल्याणप्रक्वणा वीणा कल्याणप्रक्वाणेति वा—'क्वणो वीणायां च' इति अनुपसृष्टान्निपूर्वात् वीणाविषयाच्च क्वणेर्वाऽप्रत्ययः । सोपसर्गार्थं वीणाग्रहणम् ॥

कुणालो धान्यम्, यज्ञोपकरणं च । 'पीयुक्कणिभ्यां कालन् ह्रस्वः सम्प्रसारणं च' इति कालन्प्रत्ययः । यथासङ्ख्यात्सम्प्रसारणं च ॥

कुणपम् —'कणः सम्प्रसारणं च' इति कपन् प्रत्ययः सम्प्रसारणं च ।

कङ्कणीका—प्रतिसरः । 'चङ्क्वणेः कङ्कण च' इति यङ्लुगन्तादीकन्प्रत्ययः, कङ्कणादेशश्च ॥

व्रणति । वव्राण । व्रणितेत्यादि । अयं बशादिः क्वचित्पठ्यते । दन्तोष्ठ्यादिरेव सर्वत्र । तथा च देवः—

व्रणेच्छब्दार्थविषये व्रणयेद्गात्रचूर्णने । इति ॥

गात्रचूर्णनार्थोऽयं कथादिः ॥

भ्रणति । बभ्राण । भ्रणिता ॥

ध्वणति । दध्वाण । ध्वणितेत्यादि ॥

ध्रणिरपि सम्मतायामत्र पठ्यते ॥

## ओणृ अपनयने ॥ ४४८ ॥

ओणति । प्रोणति । ओणाञ्चकार । ओणिता ॥

ओणिणिषति । ओणयति ।

मा भवानोणिणत्—ऋदित्त्वान्नोपधाह्रस्वः । इदमेव ऋदित्त्वं द्विर्वचनात्पूर्वमुपधाह्रस्वत्वे ज्ञापकम् इत्युक्तम् ।

अवावा—'अन्येभ्योऽपि दृश्यते' इति वनिपि 'विड्वनोरनुनासिकस्यात्' इति णकारस्याकारे अवादेशे 'सर्वनामस्थाने' इत्युपधादीर्घे नलोपः ॥

स्त्रियाम् अवावरी—'वनो र च' इति वन्नन्तप्रातिपदिकत्वात् ङीप्रौ । 'वनो न हशः' हशान्ताद्यो वन् विहितस्तदन्तात् ङीप्रौ नेत्ययं प्रतिषेधः प्रायिकत्वादत्र नेति न्यासादौ ॥

**शोण वर्णगत्योः ॥ ४४९ ॥**

शोणति । शुशोण । शोणिता ॥

शुशोणिषति । शोशोण्यते । शोशोण्टि ॥

शोणयति । अशुशोणत् ॥

शोणितम् ॥ शोणः ।

शोणी, शोणा—' 'शोणात्प्राचाम्' इति वा ङीप् ।

**श्रोणृ सङ्घाते ॥ ४५० ॥**

श्रोणतीत्यादि ।

श्रोणिः—इन्प्रत्ययः ॥

श्रोणी—कृदिकारत्वाद्वा ङीष् ॥

श्रोणा—नक्षत्रम्; अजन्ताट्टाप् ।

**श्लोणृ च ॥ ४५१ ॥**

श्लोणतीत्यादि ॥

शोणादयस्त्रयः तालव्योष्मादयः ॥

**प्रैणृ गतिप्रेरणश्लेषणेषु ॥ ४५२ ।**

पैणृ इति क्वचित्पठ्यते । प्रैणतीत्यादि ॥

**ध्रण शब्दे ॥ ४५३ ॥**

उपदेशे नान्तोयमिति प्रागस्य निर्देशो न कृतः । तस्य प्रयोजनं यङ्लुकीति मैत्रेयः । अतोऽस्य दण्डके पाठः प्रक्षिप्तः । ध्रणतीत्यादि । 'रषाभ्याम्' इति णत्वम् ॥

यङ्लुकि—दन्भ्रन्ति । दन्भ्रान्त इत्यादौ णत्वस्य 'नश्चापदान्तस्य' इत्यनुस्वारेऽसिद्धत्वात् कृते तस्मिन् परसवर्णः । तस्यासिद्धत्वात्पुनर्णत्वं न भवति। अभ्यासस्य 'नुगतः' इति नुक् ॥

अस्मादनन्तरं क्वचित्कोशे 'बण भण धण' इति त्रयः पठ्यन्ते । तत्र भणिर्मैत्रेयानुसारेण दण्डके पठितः । धणिरपि सम्मतायामिति तत्रैवोक्तम् ॥

बणति । बाणः, उद्बूण इत्यच् ॥

**कनी दीप्तिकान्तिगतिषु ॥ ४५४ ॥**

कनति । चकान । कनिता । इत्यादि ॥

कन्या ॥

कन्याया अपत्यं कानीनः—'कन्यायाः कनीन च' इत्यण् कनीनादेशश्च । अत एव निर्देशात् यत् । स्वरितान्तत्वं तु 'तिल्पशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' इति । अन्यथा 'यतोऽनावः' इति यदन्तस्य द्व्यचो विधीयमान आद्युदात्तस्स्यात् ॥

कनकम्—'कुन् शिल्पिसंज्ञयोः' इति कुन् ॥

**ष्टन वन शब्दे ॥ ४५५ ॥**

स्तनति । तस्तान । स्तनितेत्यादि ॥

तिस्तनिषति । तंस्तन्यते । तंस्तनीति । स्तन्ति । ध्वनतिवत्प्रक्रिया ॥

स्तानयति । अतिष्टनत् ।

अभिनिष्टानः विसर्जनीयः । 'अभिनिसः स्तनः शब्दसंज्ञायाम्' इति षत्वम् । अन्यत्र अभिनिस्तनति मृदङ्गः ॥

अत्र न्यासे सकारादिरयं पठितः । तदस्य षोपदेशपर्युदासवाक्ये अनुपादानान्निर्मूलम् । अत एव पुरुषकारे मूर्धन्यादिरेवायं दर्शितः ।

स्तान्यम्—ण्यत् ॥

स्तनः—अच् ॥

स्तन्यम्—'शरीरावयवाद्यत्' इति भवार्थे यत् ॥

स्तनितम् ॥

स्तनयतीति—देवशब्दार्थस्य कथादिपठितस्य ॥

वनति । ववान ववनतुः । वनितेत्यादि ॥

वनितम् ॥

वनित्वा ॥

वतिः— क्तिनि 'तितुत्र' इतीण्निषेधात् 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकलोपे वतिरिति भवति । अनुदात्तोपदेशा—यमिरमिनमिहनिगमिमन्यतयः ॥

प्रवत्य—'वा ल्यपि' इत्यनुदात्तोपदेशादीनां विधीयमानोऽयं अनुनासिकलोपविकल्पो व्यवस्थितविभाषाविज्ञानात् नान्तेषु नित्यः अन्यत्र विकल्प इति इह नित्यः ॥

वन्तिः—क्तिच् । 'न क्तिचि दीर्घश्च' इति दीर्घानुनासिकलोपयोर्निषेधः । 'अनुदात्तोपदेशवनति' इति श्तिपा निर्देशात् वंवान्त इत्यादौ अनुनासिकलोपो न भवति । वनोतिनिवृत्त्यर्थस्तु श्तिपा निर्देशो न भवति, तनोत्यादित्वेन तस्यानुनासिकलोपस्येष्टत्वात् ॥

वनिष्ठुः—अपानम्, मांसविशेषश्च । ऋतन्यञ्जिवनिचत्यादिनेष्ठुच् ।

वनम्—अच् ॥

वनानां समूहो वन्या—'पाशादिभ्यो यः' इति समूहे यः। तदन्तं स्वभावात् स्त्रीलिङ्गम् ॥

वन्यम्—दिगादित्वात् भवार्थे यत् ॥

वानेयम्—'पूर्वनगरी' इति नद्यादित्वात् ढक् शैषिकः ।

वनिः, वनी—'कृदिकारादक्तिनः' इति वा ङीष् ॥

**वन षण सम्भक्तौ ॥ ४५६-४५७ ॥**

वनेरर्थभेदात्पुनः पाठ इति मैत्रेयः । तथैवोदाहरणानि ॥

सनति । ससान । सेनतुः । सनितेत्यादि ॥

सायात्, सन्यात्—'किदाशिषि' इति किस्त्वात् 'ये विभाषा' जनसनखनां यकारादौ क्ङित्यात्वं वेति तद्विकल्पः । एवं यग्यङोरपि । धातुपारायणे तु 'लोपो यि' इतिवत् वर्णमात्रे निर्दिष्टव्ये य इत्यत्वतो निर्देशात् यासुट्यात्वं नेत्युक्तम् ॥

सिसनिषति, सिषासति—'सनीवन्तर्धभ्रस्जिदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इतिइड्विकल्पः, इडभावे 'जनसनखनां सञ्झलोः' इति झलादौ सनि क्ङिति च विधीयमानमात्वं भवति ॥

सासायते, संसन्यते । 'ये विभाषा' इत्यात्वम् । इदं च क्ङित्येवेति ण्यति न भवति—सान्यं इति ॥

संसनीति, संसन्ति । संसातः । प्रकृतिग्रहणन्यायेन 'जनसन' इत्यात्वं अनुनासिकस्य' इति दीर्घं परत्वात् बाधित्वात्रापि भवति ॥

साति, । सातः । सातवान् । आत्वसूत्रे च 'झलादिः सन् जनखनोर्न सम्भवतीति सनोतेरेव विशेषणं' इति वदता

वृत्तिकारेण सनोतेः 'सनीवन्त' इति पक्षे इडागमः तदिह सनोत्यर्थमेव सन्ग्रहणमित्यभिधानात् इड्विधावात्वे च तानादिकस्यैव ग्रहणमितीव प्रतीयते ॥

अन्ये तु पुनरुभयत्रोभयोर्ग्रहणमाहुः । एवं च वृत्तौ सनोतेरित्युपादानं तस्यानुनासिकलोपादात्वं विप्रतिषेधेन इति वक्ष्यामीत्येवमर्थं मन्तव्यम् ॥

सानुः—'दृसनिजनिचरिचटिरहिभ्यो ञुण्' इति ञुण्प्रत्ययः ॥

वनु याचने । षणु दाने । इति द्वयं तनादौ ॥

अम गत्यादिषु ॥ ४५८ ॥

कनी दीप्तिगतीत्यत्र गतेः परयोः शब्दसंभक्त्योरादिशब्देन ग्रहः ॥

अमति । आम, आमतुः । अमितेत्यादि ॥

अमिमिषति ॥

आमयति—इत्यत्र 'न कम्यमिचमाम्' इति मित्त्वनिषेधात् 'मितां ह्रस्वः' इति ह्रस्वाभावः ॥

अम्यम् । 'पोरदुपधात्' इति यत् । अमित्वा । निष्ठायां 'रुष्यमत्वरसङ्घुषास्वनाम्' इतीड्विकल्पनात् अमितः, आन्तः । अमितवान्, आन्तवान् । इति भवति । इडभावे 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । क्विपि पूर्ववत् दीर्घे 'मो नो धातोः' इति नत्वे—आन् इति भवति । नलोपस्तु न भवति असिद्धत्वात् इति प्रागेवोक्तम् ॥

अमः—घञि—'नोदात्तोपदेशस्य' इति वृद्धिनिषेधः । अत एव

चिण्यपि ण्यन्तात् 'न कम्यमि' इति मित्वनिषेधात् ण्यपेक्षया वृद्धौ मा भवान् आमि इति भवति ।।

आमयः इति अम रोग इति चौरादिकस्य ।।

अमत्रम्—'अमिनक्षियजिबन्दि*पतिभ्योऽत्रन्' इत्यत्रन् ।।

अमित्रः—'अमेर्द्विषति चिच्च' इतीत्रप्रत्ययः ।।

आम्रः—'अमितम्योर्दीर्घश्च' इति रप्रत्यये दीर्घः ।।

आन्त्रम्—'अत्यमियमिशंसिभ्यस्त्रन्' इति त्रन् ।।

## द्रम हम्म मीमृ गतौ ।। ४५९-४६१ ।।

द्रमति । दद्राम । द्रमितेत्यादि ।।

लुङि 'ह्म्यन्त' इति वृद्धिनिषेधात् अद्रमीत् ।।

दिद्रमिषति । दन्द्रम्यते । दन्द्रमीति, दन्द्रन्ति । दन्द्रात इत्यादि ।।

उत्तमे—'म्वोश्च' इति नत्वे णत्वं--दन्द्रण्मि इत्यादि ।।

अदन्द्रन् इत्यत्र—तिप्सिपोर्हल्ङ्यादिलोपे—'मो नो धातोः' इति नत्वे 'पदान्तस्य' इति णत्वं न भवति ।।

द्रमयति । अदिद्रमत्—अमन्तत्त्वान्मित्वम् । अद्रमि, अद्रामि । द्रमं द्रमम्, द्रामं द्रामम् । 'चिण्णमुलोः' इति दीर्घविकल्पः ।।

स्यादिषु चिण्वदिट्पक्षे दीर्घविकल्पे णिलोपे च द्रमिष्यते द्रामिष्यत इत्यादि ।।

शुद्धे पुनरिटि णेर्गुणायादेशयोः द्रमयिष्यत इत्यादि ।।

---

* बन्धि

अण्यन्तान्निणि 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधात् अद्रमीत्येव भवति ॥

एवं ञिति णिति कृति च द्रमः, द्रमकः, इत्यादि ॥

दन्द्रमणः—'जुचङ्क्रम्य' इत्यादिना ताच्छील्यादौ यङन्तादस्माद्युचि अल्लोपयलोपौ ॥

द्रमिडः—'अमन्ताड्डः' इति डः । 'नेड्वशि' इति निषेधो बाहुलकात् न भवति ॥

हम्मति । जहम्म । हम्मितेत्यादि ॥

जिहम्मिषति । जेहम्म्यते । जंहम्मि । इति ॥

जंहन्ति । जंहन्तः । इत्यादावनुपधात्वान्नोपधादीर्घः ॥

लङि—हल्ङ्यादिसंयोगान्तलोपयोः 'मो नो धातोः' इति नत्वे—अजंहन् ॥

हम्मयति । अजहम्मत् ।

हम्मित्वा ।

हम्मतिः—ज्ञानम् । गत्यर्था बुद्ध्यर्थाः । न हम्मतिः अहम्मतिः अज्ञानम् । यद्वा—अहमिति मतिः अहम्मतिः । अहं शब्दो मान्तोऽहङ्कारवचनोऽव्ययम् ॥

मीमति । मिमीम. मिमीमतुः । मीमितेत्यादि ॥

मिमीमिषति । मेमीम्यते ॥

मेमीमीति । मेमीन्ति । मेमीन्त इत्यादि ॥

लङि अमेमीत् ।

मीमयति । अमीमिमत् ॥

मीमित्वा । मीमितः । अयं शब्दे चेति क्वचित्पठ्यते ॥

चमु छमु जमु झमु अदने ।। ४६२-४६५ ।।

चमति । चचाम, चेमतुः । चमितेत्यादि ।।

आङ्पूर्वत्वे तु 'ष्ठिवुक्लमुचमां शिति' इति दीर्घः । आचामति । आचामतु । आचामत् । आचामेः ।।

आचामयति ।।

चिणि ञिति णिति कृति च 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधात्—अचमि ।

चमः, चमकः, इत्यादि । अत्रापि 'अनाचमेः' इति वचनात्—आचामि, आचामः, आचामकः इति वृद्धिरेव । ननु वार्तिके 'अचमिकमिवमीनाम्' इति केवलस्योपादानात् सर्वत्र वृद्ध्या भाव्यम् । नैतत्, यत इदं वार्तिकं धात्वन्तरमपि पर्युदसनीयम्' न केवलं सूत्रोपात्त एव इत्येवंपरम् । तथा च भाष्ये अध्यगीष्ट—अत्यल्पमिदमुच्यते अनाचमेरिति । अत एव न्यासः—चमेस्तावत् अनाचमेरिति सूत्र एवोपादानात् प्रतिषेध इति । तथा वर्धमानोऽपि— उपसर्गोपादानात् अचमि, पर्यचमीति । वृत्तावपि वार्तिकस्योदाहरणमाङ्पूर्वमेव दर्शितम् ।।

चिचमिषति । चञ्चम्यते । चञ्चमीति, चञ्चन्ति । चञ्चान्त इत्यादि । अत्रापि प्रकृतिवदाङ्पूर्वत्वे चिणि ञिति णिति कृति वृद्धिः । अन्यत्र तदभावश्च ।

चामयति—'न कम्यमिचमाम्' इति मित्त्वनिषेधः ।।

चम्यतेऽत्रेति चमसः—'अत्यमिचमि' इत्यसच् ।।

चमूः—'कृषिचमितनिरमिसर्जिभ्य ऊः' इत्यूकारप्रत्ययः ।।

छमति । चच्छाम । छमितेत्यादि ॥

चिच्छमिषति । चञ्छम्यते । चञ्छमीति, चञ्छन्ति । चञ्छान्तः इत्यादि ॥

छमयति—अमन्तत्वान्मित्वम् ।

चिण्णमुल्परे णौ 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति वा दीर्घः अच्छमि, अच्छामि । छमं छमं, छामं छामम् । इति ॥

चिण्वदिटि वृद्धेर्भावाभावाभ्यां णिलोपे छमिष्यते, छामिष्यते इत्यादि ॥

शुद्धे पुनरिटि णेः गुणाययोः छमयिष्यत इत्यादि ॥

णिचोऽभावे चिणि ञिति णिति कृति च 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधात् अच्छमि इत्यादिरेव भवति ॥

जमति । जजाम । जेमतुः । जमिता ॥

झमति । जझाम । झमिता । इत्यादि पूर्ववत् ॥

अत्र मैत्रेयः—जिमिं केचिदिच्छन्ति—जेमनं इति एषामुदित्त्वात्क्त्वायां इड्विकल्पे चमित्वा, चान्त्वा, इत्यादि भवति ॥

निष्ठायाम्—'यस्य विभाषा' इत्यनिट्त्वात् चान्त इत्यादि । अनिटि 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः

## क्रमु पादविक्षेपे ॥ ४६६ ॥

क्रामति । चक्राम । चक्रमतुः । क्रमिता । क्रमिष्यति क्रामतु । अक्रामत् क्रामेत् आशिषि क्रम्यात् । अक्रमीत्—'ह्म्यन्त' इति वृद्धिनिषेधः । अक्रमिष्यत् । 'क्रमः परस्मैपदेषु' इति परस्मैपदपरे शिति दीर्घः ॥

'क्राम' इत्यत्र हेर्लुकि प्रत्ययलक्षणेन परस्मैपदपरशित्परत्वेन दीर्घः। न च 'न लुमता' इति निषेधः। तस्य लुमता लुप्तप्रत्यय-निमित्ताङ्गसंज्ञाविषयत्वात्। इह च हौ विकरणान्तमङ्गम्। क्रमन्तु विकरणे। विकरणश्च नित्यत्वात् पूर्वमेवात्र भवति। 'वा भ्राश-भ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटि लषः' इति शब्विषये पक्षे श्यनो विधा-नात्—क्राम्यति। क्राम्यतु। अक्राम्यत्। क्राम्येत् इत्यपि भवति। पूर्ववद्दीर्घः।

चिक्रमिषति। चङ्क्रम्यते। चङ्क्रमीति, चङ्क्रन्ति इत्यादि॥

क्रमयति। अचिक्रमत्। 'मितां ह्रस्वः' इत्यत्र वृत्तिः-'केचित् अत्र वा इत्यनुवर्तयन्ति। सा च व्यवस्थितविभाषा। तेन सङ्क्रामयतीत्येवमादि सिद्धं भवति' इति। अविगीतस्तु सङ्क्रमयतीति। अत्रैव 'रसातलं सङ्क्रमिते तुरङ्गे' इत्यादिप्रयोगोऽ-नुकूलः

क्रमते। चक्रमे। क्रन्ता। क्रंस्यते। क्रमताम्। अ-क्रमत। क्रमेत। क्रंसीष्ट। अक्रंस्त। अक्रंस्यत। 'अनु-पसर्गाद्वा' इति पक्षे तङ्। अत्रापि शब्विषये वा श्यनि—क्रम्यते इत्यादि। 'वृत्तिसर्गतायनेषु क्रमः' इति वृत्त्यादिषु नित्यस्तङुदाहार्यः। वृत्तिरप्रतिबन्धः। सर्ग उत्साहः। तायनं स्फीतता। अयं वृत्त्यादिविषयस्तङ् 'उपपराभ्याम्' इति सिद्धे सति आरम्भान्नियमादन्योपसृष्टान्न भवति। तेन सङ्क्रामतीति परस्मैपदमेव॥

यदाऽयमाङ्पूर्व उद्गमनार्थस्तदा 'आङ उद्गमने' इति वचनात् नित्यस्तङुदाहार्यः—अक्रमते भानुरित्यादि। अत्र 'ज्योतिरु-द्गमने इति वक्तव्यम्' इत्युक्तत्वात् आक्रामति धूमो हर्म्यत-

लात् इत्यत्र न भवति । उद्गमने वर्तमानोऽयमकर्मक इति कैयटे उक्तम् । पदमञ्जर्यां तु—'आक्रामति धूमो हर्म्यतलम्' इति वृत्तिनुपादाय उद्गमने क्रमिरकर्मकः । तस्मात् आक्रामति धूमो हर्म्यतलादिति पठितव्यमित्युक्त्वा यद्वा—उद्गमनपूर्विकायां व्याप्तौ अत्र क्रमिर्द्रष्टव्यः इति द्वितीया समर्थिता ॥

'नभः समाक्रामति चन्द्रमाः' इत्यत्र नोद्गमनं विवक्षितम् । किं तर्हि व्याप्तिरिति परस्मैपदमिति तत्रैवोक्तम् ॥

विक्रमते—सुष्ठु पदानि विक्षिपतीत्यर्थः । अश्वादीनां गति-विशेषो विक्रम इति वृत्तिः । 'वेः पादविहरणे' इति नित्य-स्तङ् । अन्यत्र—'विक्रामत्यजिनसन्धिः' इति । त्रुट्यतीत्यर्थः ॥

प्रक्रमते भोक्तुम् । उपक्रमते भोक्तुम् । 'प्रोपाभ्यां सम-र्थाभ्याम्' इति नित्यस्तङ् । समर्थौ समानार्थौ । तच्च समा नार्थत्वमादिकर्मणि । अन्यत्र—प्रक्रामति । उपक्रामतीति । आगच्छति, उपगच्छतीति चार्थः । आत्मनेपदेषु वलाद्यार्धधातुकस्य 'स्नुक्रमोरनात्मनेपदनिमित्ते' इतीडभावः । स्नुक्रमोर्वलाद्यार्धधातुक-स्येडागमो भवति आत्मनेपदनिमित्ताभावे इत्यक्षरार्थः । तदार्धा दनयोरुदात्तत्वादेवेटः सिद्धावारम्भादात्मनेपदनिमित्तत्वे निषेधार्थं सूत्रं भवति । निमित्तग्रहणं कुर्वद्रूपताप्रतिपत्त्यर्थं ; न तु योग्यतापरमिति कर्मकर्तृविषयाद्भावकर्मविषयाच्चास्मात् कृतस्सत्यामपि योग्यतायामा-त्मनेपदाभावात्—प्रक्रमिता प्रक्रमितुम्, प्रक्रमितव्यम्, इतीट् भवत्येव । न चार्थविशेषा उपसर्गविशेषाश्च आत्मनेपदस्य निमित्तं न क्रामतिरिति कथमस्यात्मनेपदनिमित्तत्वमिति मन्तव्यम् । यतस्तेषां विषयतया विशेषणत्वात् तद्विशिष्टो धातुरेव निमित्तम् । चिक्रंसते । चिक्रंस्यते इत्यादौ 'पूर्ववत्सनः' इत्यतिदेशात् प्रकृतिगतमेव सनन्तेऽ-

प्यात्मनेपदस्य निमित्तमिति तस्य क्रमिनिमित्तत्वादिडभावः । चिक्रंस्यत इत्यादौ भावकर्मणोरपि परत्वात् 'पूर्ववत्सनः' इत्येवात्मनेपदमिति प्रकृतेरेवात्मनेपदनिमित्तत्वमितीडभावः सिद्धः । अस्ति च विप्रतिषेधः भावकर्मणोरित्यात्मनेपदक्रमिनिमित्तत्वाभावादिट् स्यात्, अनेन तु सति नेति । यदा तु सनन्तात् णिच् तदाऽऽत्मनेपदस्य क्रमिनिमित्तत्वाभावात् चिक्रमिषयते इतीटा भाव्यम् । तथा चिक्रमिषते स्वयमेवेति कर्मकर्तर्यपि । अत्र हि कर्मपदनिर्देशनिमित्तमेवात्मनेपदं न तु क्रमिनिमित्तम् । अत्र हरदत्तः— सिद्धं तु स्नोरात्मनेपदेन समानपदस्थस्येण्निषेधात् 'क्रमेश्च' इति वार्तिककारवचनादिहाप्यात्मनेपदेन समानपदस्थत्वादिटा न भाव्यमित्याह । भाष्यवार्तिकपूर्वापरपर्यालोचनायां समानपदस्थत्वे तात्पर्यं नेति प्रतीयते । यतस्तु खलु वार्तिककारः आत्मनेपदे परे स्नुक्रमोर्नेडित्येव सूत्रार्थे आश्रीयमाणे निर्दिष्टपरिभाषाया आनन्तर्य एव भाव्यत्वात् प्रचिक्रंसिष्यते इत्यत्र स्येन व्यवधानात् प्रक्रंसिष्ट इत्यत्र च सीयुट आत्मनेपदभक्तत्वात् व्यपवर्गाभावात्* आत्मनेपदपरत्वाभावादिण्निषेधाप्रसङ्गादात्मनेपदपरप्रतिषेधे तत्परसीयुडेकादेशेषु च प्रतिषेधो वक्तव्य इत्युक्तत्वात् तत्परिहारमात्राय सिद्धत्वादात्मनेपदेन समानपदस्थस्येण्निषेधादित्याह ॥ भाष्यकृता च यथान्यासमेवास्त्विति सूत्रमेव स्थापितम् । न च तत्र समानपदस्थत्वावगतिः । तथा वृत्तावपि—"न चेत्स्नुक्रमी आत्मनेपदस्य निमित्तं, निमित्तग्रहणं सीयुडादेः तत्परस्य च प्रतिषेधार्थम्" इत्युक्तम् । गतमदः । प्रक्रान्तेत्यादावात्मनेपदाभावेऽपि 'क्रमेस्तु कर्तर्यात्मनेपदविषयादसत्यप्यात्मनेपदे कृति प्रतिषेधो वक्तव्यः' इति इडभावः । अनुपसर्गात्क्रमेः क्रन्ता क्रमिता इत्युभयमपि भवति, 'अनुपसर्गाद्वा'

---

* भक्तत्वात् प्रक्रंस्यते इत्यत्र व्यपवर्गभावात्.

इति विकल्पेनात्मनेपदनिमित्तत्वादित्येके* । अन्ये त्वात्मनेपदविषया-दिति अनन्यभावं विषयशब्दार्थं वर्णयन्तः क्रमितेत्येव भवितव्य-मित्याहुरिति पदमञ्जर्याम् । क्रमेरात्मनेपदे तासावनिट्त्वात् ' उ-पदेशेऽत्वतः ' इति थलि इण्निषेधो नाशङ्क्यः । यतः परस्मै-पदे तासौ सेट्त्वान्नित्यानिट्त्वाभावः ॥

क्रान्त्वा, क्रन्त्वा, क्रमित्वा—उदित्त्वादिड्विकल्पः । इडभावे ' क्रमश्च क्त्वि ' इति वा दीर्घः ॥

क्रान्तः—' यस्य विभाषा ' इतीण्निषेधः ॥

क्रमः—घञ् । ' नोदात्तोपदेश ' इति वृद्धिनिषेधः ॥

क्रममधीते क्रमकः—' क्रमादिभ्यो वुन् ' इति तदधीते तद्वे-देति विषये वुन् ॥

चङ्क्रमणः—' जुचङ्क्रम्य ' इति युच् ॥

न क्रामतीति नक्रः—' डोऽन्यत्रापि दृश्यते ' इति डः । 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ' इति निपातनान्नञो नलोपाभावः ॥

क्रिमिः—' क्रमिगमिनमिस्थम्भामच इच्च ' इतीन्प्रत्यये अकारस्ये-कारः ॥

क्रिमिणः—' लोमादिपामादिपिच्छादिभ्यः शनेलचः ' इति पा-मादिपाठान्मत्वर्थीयो नः ॥

यज्ञनारायणार्येण प्रक्रियेयं प्रपञ्चिता ।

अस्या निश्शेषतस्सन्तु बोद्धारो भाष्यपारगाः ॥

अणादय उदात्ता उदात्तेतः ॥

---

* —त्मनेपदविषयत्वादित्येके.

अय वय पय मय चय तय णय गतौ ॥ ४६७-४७३ ॥

इत आरभ्य रेवत्यन्ता उदात्ता अनुदात्तेतः ॥

अयते । अयाञ्चक्रे—'दयायासश्च' इत्याम् ॥

अयिता । अयिष्यते । अयताम् । आयत । अयेत । आशिषि— अयिषीष्ट । आयिष्ट ॥

अस्य लुङ्लिटोर्ध्वमि—'विभाषेटः' इति मूर्धन्यविकल्प उदाहार्यः । एवमन्येष्वपि यान्तेषु ॥

अयियिषते ॥

अययति । मा भवानयियत् ॥

आयः, अयः—घञचौ ॥

चलनार्थत्वेऽपि नास्य युजस्ति 'नय' इति यान्तानां तन्निषेधात् । तेन अयिता इति सामान्यस्तृन् भवति ॥

प्लायते—'उपसर्गस्यायतौ' इति उपसर्गस्थस्य रेफस्यायतिपरत्वाल्लत्वम् । ननु एकादेशस्य स्थानिवत्त्वात् रेफस्य अयतिः परो न भवति ; सत्यम्. 'येन नाव्यवधानं तेन व्यवहिते वचनप्रमाण्यात्' इत्येकेन वर्णेन व्यवधानमाश्रयिष्यते । न चास्ति 'पूर्वत्रासिद्धे न स्थानिवत्' इति. 'तस्य दोषस्संयोगादिलोपलत्वणत्वेषु' इति तस्य सापवादत्वात्, एवं च पल्ययत इत्यत्रापि लत्वं भवति । न चानन्तरो निर्दिष्टो रेफोऽवकाश इति वाच्यम्, तर्हि लाघवार्थं तावेवोपाददीत । येषान्तूपसर्गविशेषणमयतिग्रहणं अयतिपरस्योपसर्गस्य यो रेफः इति तेषां नैवास्य चोद्यस्यावसरः किं तु प्रत्यय इत्यत्रापि लत्वं स्यात्, भवितव्यमेवेति तेषामेव केचित् ।

अपरे तु —प्रतिपूर्वस्यायतेनैव प्रयोग इति । तेषां प्रत्ययशब्दः प्रतिपूर्वादिणोऽचि । प्रत्ययितशब्दोऽप्यस्मादेव तारकादित्वादितचि ॥

निश्यते दुश्यते इति प्रयोगस्सान्तयोर्द्रष्टव्यः न ह्यत्र लत्वप्रसङ्गः 'सयजुषाः' इत्यस्यासिद्धत्वात् ॥

वयते ॥ ववये —वादित्वान्नैत्वाभ्यासलोपौ ॥ वयितेत्यादि पूर्ववत् ॥

विवयिषते । वावय्यते । वावयीति । वावति । वावतः । वावयति । वावयिषि । वावसि । वावथ वावथः । वावयीमि । वावामि । वावावः । वावामः वलि यलोपः । वजादौ तु कृते यलोपे 'अतो दीर्घो यञि' इति दीर्घः । ञौ यलोपात्पूर्वं नित्यत्वादद्भावे वल्परत्वाभावाद्यलोपाभावः । लोटि सेर्हिभावात् परत्वात्पूर्वं वलि लोपे तदनन्तरं हिरादेशः । तस्य च 'अतो हेः' इति लुकि वावा इति भवति । पूर्वं तु हिभावे तमाश्रित्य वलि लोपे सन्निपातपरिभाषया हेर्लुङ्न स्यात् । उत्तमे तु नित्यत्वादाटि यलोपाप्रसङ्गात् दावयानि इत्यादि भवति । लङि तिप्सिपोः परमपि हल्ङ्यादिलोपं यलोपो बाधत इति अवावत्, अवाव, इति भवति । इदं च व्योर्वलि लोप इत्यनुवादपूर्वं विधेये निर्देश्ये तस्य पूर्वनिर्देशेन विध्यन्तराद्बलीयस्त्वज्ञापनादवगम्यते ॥

यत्तु—तत्र वृत्तावुक्तम् — पूर्वनिर्देशस्य फलं वेरपृक्तलोपात्पूर्वं वलि लोप इति, तद्विध्यन्तरोपलक्षणम् । आहुश्चैवं तत्र व्याख्यातारः । यद्वा—प्रकृतिविशेषं प्रत्ययविशेषं चापेक्षमाणाद्धल्ङ्यादिलोपात् वर्णमात्रापेक्षत्वादन्तरङ्गो वलि लोप इति पूर्वमेव असावत्र प्रवर्तिष्यते ॥

पयते । पेये । पयिता ॥

मयते । मेये । मयिता ॥

चयते । चेये । चयिता ॥

तयते । तेये । तयिता ॥

नयते । नेये । नयिता इत्यादि । चयिवत् ॥

नयतेर्णोपदेशत्वात् प्रणयत इति णत्वं भवति ॥

अत्र षयीति मूर्धन्योष्मादिरपि क्वचित् कोशे पठ्यते । मैत्रेयादिभिस्तु न पठ्यते ॥

वयादीनामप्ययिवत् 'नयः' इति गुञ्निषेधात् तच्छीलादौ तृनेव ॥

णय रक्षणे च इति मैत्रेयः । तय णयेत्येके ॥

अयादीनां क्वौ वलि लोपे तुकि अत्, वत्, इत्यादि भवति । अतो लोपस्तु न भवति, आर्धधातुकोपदेशे यदकारान्तं तस्य तद्विधानात् ॥

**दय दानगतिरक्षणहिंसादानेषु ॥ ४७४ ॥**

सर्पिषो दयते । सर्पिर्दयते—'अधीगर्थदयेशां कर्मणि' इति कर्मणि शेषे षष्ठी । अशेषे तु द्वितीयैव ॥

दयाञ्चक्रे—'दयायासश्च' इत्याम् ॥

दयितेत्यादि । वयिवत् ॥

दयालुः—'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्' इति । ताच्छीलिक आलुच् ॥

दया—दयतिः भिदादिषु द्रष्टव्यः ॥

रय गतौ ।। ४७५ ।।

रयते इत्यादि । वयिवत् ।।

रायः घञ् ।।

रयः तु रीङः ।।*

ऊयी तन्तुसन्ताने ।। ४७६ ।।

ऊयते । ऊयाञ्चक्रे—'इजादेश्च गुरुमतः' इत्याम् ।।

ऊयितेत्यादि ।।

ऊयियिषते । ऊययति । मा भवानूयियत्—द्विर्वचनात्पूर्वमुपधाह्रस्वत्वमित्युक्तम् ।।

ऊयित्वा ।

ऊतः । ऊतवात्—ईदित्त्वान्निष्ठायाममनिट्त्वम् ।।

ऊतिः—बाहुलकात् क्तिन् । 'ऊतियूति' इति निपातनमवतेः क्तिनि उदात्तार्थमिति वृत्तावुक्तम् ।।

पूयी विशरणे दुर्गन्धे च ।। ४७७ ।।

पूयते । पुपूये । पूयितेत्यादि ।।

पुपूयिषते । पोपूय्यते । पोपूयीति । पोपोति । पोपूतः इत्यादि वयतिवत् ।।

तसादौ ङित्त्वान्न गुणः ।।

पूययति ।। अपूपुयत् ।

पूयित्वा । पूतः । पूतवान्—ईदित्त्वात् निष्ठायामनिट्त्वम् ।।

* ....तु अचि·

पूतिः—' गन्धस्येदुत्पूति ' इत्यादिनिर्देशात् क्तिन् ॥

पूयः*—पचाद्यच् ॥

## क्नूयी शब्दे उन्दने च ॥ ४७८ ॥

क्नूयते । चुक्नूये । क्नूयितेत्यादि पूयतिवत् ॥

क्नोपयति—' अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ' इति पुकि यलोपे ' पुगन्तलघूपधस्य च ' इति गुणः ॥

अचुक्नुपत्—कृतेऽपि गुणे ' णौ चङि ' इति ह्रस्वः ।

क्नयीति सानुबन्धकनिर्देशात् यङ्लुकि चोक्नूयीतीति भवति ॥

चेलक्नोपं वृष्टो देवः—' चेले क्नोपेः ' इति ण्यन्तादस्मात्कर्मणि चेल उपपदे वर्षप्रमाणे गम्यमाने णमुल् । यावता वर्षेण चेलं क्लिद्यति तावद्वृष्ट इत्यर्थः ॥

चेल इत्यर्थग्रहणमिति वस्त्रक्नोपमित्याद्यपि भवति । अस्यापीदित्त्वान्निष्ठायामनिट्त्वम् ॥

## क्ष्मायी विधूनने ॥ ४७९ ॥

क्ष्मायते । चक्ष्माये क्ष्मायितेत्यादि ॥

चिक्ष्मायिषते । चाक्ष्माय्यते । चाक्ष्मायीति, *चाक्ष्माति ।

तसादौ क्ङिति सार्वधातुके ' श्नाभ्यस्तयोरातः ' ' ई हल्यघोः ' इति लोप ईत्वं च—चाक्ष्मीत इत्यादि ॥

लोटि तातङ्पक्षे तस्य ङित्त्वात् चाक्ष्मीतात् इति भवति । हेरप्यपित्त्वात् ङित्त्वात् चाक्ष्मीहि ॥

---

* पूयं

लङि—नित्यत्वात् यलोपात्पूर्वं 'सिजभ्यस्त' इति जुस्भावो भवति। अचाक्ष्मायीत्। अचाक्ष्मीनाम्। अचाक्ष्मायुरित्यादि॥

क्ष्मापयति। अचिक्ष्मापत्। 'अर्तिह्री' इत्यादिना पुक्॥

अस्यापि सानुबन्धकस्य निर्देशात् यङ्लुकि—चाक्ष्माययतीति॥

ईदित्वान्निष्ठायां क्ष्मातः क्ष्मातवान्॥

**स्फायी ओ प्यायी वृद्धौ॥ ४८०-४८१॥**

स्फायते। पस्फाये—अभ्यासे 'शर्पूर्वाः खयः' इति खयः शेषः॥

स्फायितेत्यादि क्ष्मायिवत्॥

णौ 'स्फायो वः' इति यकारस्य वकारे स्फावयति। अपिस्फवत् इति भवति॥

स्फीतः स्फीतवान्—'स्फायः स्फी निष्ठायाम्' इति स्फीभावः॥

वत्वस्फीभावौ प्रकृतिग्रहणन्यायेन यङ्लुक्यपि भवत इति पास्फावयति। स्फीतः स्फीतवान् इति भवति॥

स्फायत इति स्फाः—क्विपि वलि लोपः। अयं वेरपृक्त-लोपात्पूर्वं भवतीति वृत्तौ प्रतिपादितम्॥

स्फाश्च तदण्डं च स्फाण्डम्। एवम्—स्फान्त्रम्। वृद्धाण्डान्त्रे उच्येते॥

स्फारः स्फायितञ्चि इत्यादिना रक॥

प्यायते। पिप्ये। पिप्याते। पिप्यिरे। पिप्यिषे। पिप्याथे पिप्यिध्वे। पिप्यिवहे—परत्वात् 'लिड्यङोश्च' इति प्यायः पीभावे पुनःप्रसङ्गविज्ञानात्पिशब्दस्य द्विर्वचने 'एरनेकाचः' इत्य-

जादौ यण् ॥

प्यायितेत्यादि पूर्ववत् ॥

लुङि 'दीपजनबुधपूरितायिप्यायिभ्योऽन्तरस्याम्'। इति कर्तरि तशब्दे वा चिणि—अप्यायि, अप्यायिष्टेति भवति ॥

यङि लिड्वत् पीभावे पेपीयते इत्यादि ॥

यङ्लुकि तु—पाप्याति। पाप्यात:* इत्यादि पूर्ववत् ॥

पीनः। पीनवान्—'प्यायः पी निष्ठायाम्' इति वा पीभावः ॥

इयं च व्यवस्थितविभाषेति अनुपसृष्टे नित्यम्। उपसृष्टे तु नैव। आप्यानः प्रप्यानश्चन्द्रमा इति। आङ्पूर्वादन्धूधसोर्भवत्येव—आपीनमन्धुः। आपीनमूधः इति। 'ओदितश्च' इति निष्ठानत्वम् ॥

ईदित्वं पीभावाभावे निष्ठाया इण्निवृत्त्यर्थम्।
ओदितोऽनन्तराया निष्ठाया नत्वार्थमिदमोदित्त्वम् ॥

कृते पीभावे स्वरान्तत्वात् 'अनिट्स्वरान्तः' इत्यनिट्त्वे सावकाशमिति पीभावाभाव इण्निवृत्तेर्न ज्ञापकः। स्फायेस्त्वीदित्त्वे स्फीभावस्य नित्यत्वात् स्वरान्तत्वादनिट्त्वे सिद्धे अनुदात्तेत्त्वमात्रं फलम्। न च सत्यपीटि सवर्णदीर्घत्वेनेदमेव रूपमिति मन्तव्यम्। परत्वादियङ्प्रसङ्गात् ॥

## तायृ सन्तानपालनयोः ॥ ४८२ ॥

सन्तानः प्रबन्धः। तायते। तताये। तायितेत्यादि पूर्ववत् ॥

लुङि—'दीपजन' इत्यादिना कर्तरि तशब्दे वा चिणि—अतायि, अतायिष्ट, इति भवति ॥

---

* पाप्यीतः।

ऋदित्वात् णौ चङ्युपधाया ह्रस्वाभावात् अततायत् ॥

अनीदित्वात् निष्ठायाम्—तायितः । तायितवान् ॥

**शल चलनसंवरणयोः ॥ ४८३ ॥**

शलते । शेले । शलिता । शलिष्यते । शलताम् । अशलत । शलेत । आशिषि—शलिषीष्ट । अशलिष्ट । शिशलिषते । शाशल्यते । शाशलीति, शाशल्ति ॥

लङि तिप्सिपोः हल्ङ्यादिलोप—अशाशल् ॥

शालयति । अशीशलत् ॥

शलित्वा । शलितः ॥

शलभः—'कृशृशलिभ्योऽभच्' ॥

शल्कम्—'इण्भिकापाशलि' इति कन् ॥

शलाका—'शलिपतिपटिभ्योनित्' इत्याकः ॥

शालूकः—'शलिमण्डिभ्यामूकण्' इत्यूकण् ॥

शललम्—'कलतृपश्च' इत्यत्र प्रत्ययस्य पूर्वनिर्देशस्य धात्वन्तरादप्ययं भवतीति सूचनार्थत्वात् कुण्डलादिवत् कलः प्रत्ययः ॥

शलली—पिप्पल्यादित्वात् ङीष् । जातिलक्षणो वा ॥

शलालुः—गन्धद्रव्यविशेषः । शलालुः पण्यं व्यवहार्यमस्य शलालुकः । 'शलालुनोऽन्यतरस्याम्' इति प्रथमान्तादस्य पण्यमित्यर्थे ष्ठन् । षित्वात् स्त्रियाम्—शलालुकी ॥

अन्यतरस्यां ग्रहणात् 'प्राग्वहतेष्ठक्' इति ठकि, 'किति च' इत्यादिवृद्धौ—शालालुकः । उभयोरपि ठशब्दयोरुगन्तात्परत्वात्

'इसुसुक्तान्तात्कः' इति कादेशः। अत एव 'शलालुनः' इति निर्देशात् आलुप्रत्ययः ॥

शालेति शालतावुक्तम्। अयं गत्यर्थो ज्वलादौ परस्मैपदी ॥

**वल वल्ल संवरणे सञ्चरणे च ॥ ४८४-४८५ ॥**

वलते। ववले। वलितेत्यादि शलिवत् ॥

णौ घटादित्वात् वलयति, इति ॥

वालः—'हलश्च' करणे घञ् ॥

वारः—'वालमूल' इत्यादिना पक्षे रः ॥

वलिः, वली—इन्नन्तात् 'कृदिकारादक्तिनः' इति वा ङीष् ॥

वलिनः—पामादित्वात् मत्वर्थे नः ॥

वलिभः—'तुन्दिवलिवटेर्भः' इति भः। अयमपि मत्वर्थीयः ॥

बलिः—'वलेर्बलं चाहिरण्ये' इतीन्प्रत्यये बलादेशः ॥

वलभी—बाहुलकादभचि पिप्पल्यादिदर्शनात् ङीष् ॥

वलयः—'वलिमलितनिभ्यः कयन्' इति कयन् ॥

वल्गुः—'वलेर्गुक्च' इति उप्रत्ययो गुगागमश्च ॥

वलाकः—'वलाकादयश्च' इत्याकन्नन्तो निपातितः ॥

वलाकाया अपत्यम् वालाकिः—'बाह्वादिभ्यश्च' इतीञ्प्रत्ययः। अत्रैव पाठात् जातिलक्षणं ङीषं बाधित्वा टाप् 'अजादित्वाद्वा ॥

वलाका अस्य सन्तीति वलाकी—'व्रीह्यादिभ्यश्च' इति मत्वर्थे इनिः ॥

वलीकम्—नीव्रम्। 'अलीकादयश्च' इतीकन् ॥

वल्मीकम् । बाहुलकात् मुडागमः ॥

वल्लते । ववल्ले । वल्लितेत्यादि ॥

यङ्लुकि लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च—अवावल् ॥

वल्लभः—'रासिवल्लिभ्या च' इत्यभच् ॥

वल्लरी—बाहुलकादरप्रत्यये पिप्पल्यादिदर्शनात् ङीष् ॥

वल्लिः, वल्ली—इनि कृदिकारत्वाद्वा ङीष् ॥

वल्लूरम्—शुष्कमांसम् । 'खर्जपिञ्जादिभ्यः ऊरोलचौ' इति ऊरः ॥

**मल मल्ल धारणे ॥ ४८६–४८७ ॥**

मलते । मेले । मलिता ॥

मल्लते इत्यादि पूर्ववत् ॥

माला—'अकर्तरि च कारके' इति कर्मणी घञ् । 'लस्य' इत्यत्र भाष्यकैयटयोः माङोऽयं लप्रत्यय उक्तः ॥

माली—व्रीह्यादित्वादिनिः ॥

मालभारी—'इष्टकेषीकामालानां चिततूलभारिषु' इति यथासङ्ख्यात् मालाया भारिण्युत्तरपदे ह्रस्वः । केचित्तु—तत्र हारीति पठन्ति ॥

माल्यम्—'ऋहलोर्ण्यत्' ॥

मलयः—'वलिमलि' इति कयन् ॥

मलते शरीरं धारयतीति मलम्—अच् । मृजेर्वा*व्युत्पादयिष्यते ॥

* मदेर्वा ।

मलिनः, मलीमसः—'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः' इतीनीमसजन्तौ मत्वर्थे निपातितौ ॥

केन मल्यत इति कमलम् । 'घञर्थे कविधानम्' इति कः । 'कर्तृकरणे कृता' इति समासः । कमेर्वा कलप्रत्यये व्युत्पादनीयः ॥

आमलकी—'क्वुन् शिल्पसंज्ञयोरपूर्वस्यापि' इति क्वुनि गौरादित्वात् ङीष् ॥

मल्लः—अच्प्रत्ययः ॥

मल्लिका—'संज्ञायाम्' इति स्त्रियां ण्वुल् ॥

मल्लकः—क्वुन् ॥

मलं मल्लते धारयतीति मलमल्लं कौपीनम् ॥

भल भल्ल परिभाषणहिंसादानेषु ॥ ४८८–४८९ ॥

भलते । भल्लते । इत्यादि ॥

भालः—'अकर्तरि च कारके' इति घञ् । भां दीप्तिं लातीति वा भालः ॥

भल्लूकः—श्वापदः—'उलूकादयश्च' इति ऊकान्तो निपातितः । भल्लुकोऽप्युलूकादिः ॥

भल्ल्यते हिंस्यतेऽनेनेति भल्लः—'पुंसि संज्ञायाम्' इति घः । 'हलश्च' इति घञ् वा ॥

भल्ली—'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । अयमाभण्डने चुरादिः ॥

कल शब्दसङ्ख्यानयोः ।। ४९० ।।

कलन इत्यादि ।।

कालः—'अकर्तरि च कारके' इति घञ् ।।

काले भवं काल्यम्—'दिगादिभ्यो यत्' इति सप्तम्यन्ताद्भवार्थे यत् ।।

कालः प्राप्तोऽस्य काल्य उत्सवः । 'कालाद्यत्' इति प्रथमान्तादस्य प्राप्तमित्यर्थे यत् ।।

अनित्यो वर्णः कालेन रक्तो वा कालिकः । 'कालाच्च' इति अनित्ये वर्णे रक्ते च वर्तमानात् कन् ।।

काली—'जानपद' इत्यादिना वर्णे ङीष् ।।

अन्यत्र—काला ।।

कालिका—संज्ञायां कनि 'केऽणः' इति ह्रस्वः ।।

कालिलम्—'सलिकलि' इति इलच ।।

कलभः—कृगृसृशलिकलि' इत्यभच् ।।

कलिः—इतीन्प्रत्ययः ।।

कलिना दृष्टं साम कालेयम्—'कलेर्ढक्' इति तृतीयान्तात् दृष्टं सामेत्यर्थे ढक् । 'आयनेय' इत्यादिनेयादेशः । सर्वत्र 'अग्निकलिभ्यां ढग्वक्तव्यः' इत्युक्तत्वात सर्वेष्वर्थेष्वयं ढग्भवति ।।

कलिका—संज्ञायां क्वुन्प्रत्ययः ।।

कलिं गृह्णाति कलयति—'मुण्डमिश्र' इत्यादिना गृह्णात्यर्थे णिचि णाविष्ठवदिति टिलोपः । अत्र हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति णिसन्नियोगेनेकारस्याकारविधानादग्लोपित्वाच्च

ह्रस्व भावात्* अचकलत् इति भवति । अत्र यद्यपीकारोप्य-गेव तथाऽपि तस्य टेरिति लोपात्परत्वाद्वृद्धौ ऐकारे तस्य चाया-देशात्पूर्वं परत्वाट्टिलोपे अङ्गमग्लोपि न स्यात् , कृते त्वत्वे वृद्धौ कृतायामप्यङ्गमग्लोप्येव ।।

ननु च वृद्धावात्वे पुकि च तत्सहितस्य टिलोपेन भाव्य-मित्यनग्लोपित्वात् कथमग्लोप्यङ्ग ; नैष दोषः । तत्राग्लोपिग्रह-णस्य समुदायार्थत्वात् । अन्यथा मालामाख्यत् अममालत् इत्यादौ कवलस्याप्यको लोपे 'अचः परस्मिन्' इति तस्य स्थानिवत्वात् अभ्यासस्य चङ्परणिपरकत्वाभावादेव सन्वद्भावो न भविष्यतीति किमग्लोपिग्रहणेन । न च मन्तव्य सर्वत्राभ्यासस्य चङ्परणि–परत्वायोगात् व्यवधानेन भाव्यमेवेत्यका प्राप्तेन स्थानिवद्भावेन व्यवधानेऽपि तदिति तत्रैव निषेधार्थमेतदस्त्विति । 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति न्यायेन अवर्जनीयोत्त-रव्यञ्जनव्यवधानस्यैवाश्रयणं युक्तम् ।।

अयं क्षेपे चुरादिः । गतिसङ्ख्यानयोः कथादिः ।।

कल्ल अव्यक्ते शब्दे ।। ४९१ ।।

कल्लते इत्यादि ।।

कल्लोलः—किशोरादित्वादीरप्रत्ययः । कपिलकादित्वाल्लत्वम् ।। अशब्द इति स्वामी, अशब्दस्तूष्णींभाव इति च ।।

तेवृ देवृ देवने ।। ४९२-४९३ ।।

तेवते । तितेवे । तेविता । तेविष्यते । तेवताम् ।

---

* अग्लोपित्वाच्चङि सन्वद्भभावात् ।

अतेवत । तेवेत । तेविषीष्ट । अतेविष्ट । अतेविष्यत । इत्यादि ॥

तितेविषते । तेतेव्यते ॥

तेवयति । अतितेवत्—ऋदित्वान्नोपधाह्रस्वः ॥

वकारान्तानाम् ऊठ्भाविनां भाषायां यङ्लुङ्नास्ति. 'छ्वोश्शूट्' इत्यत्र क्ङिद्ग्रहणानुवृत्त्यननुवृत्ती प्रस्तुत्य—'तत्र त्वेतावानेव विशेषः । अनुवर्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यम्' इति भाष्ये उक्तत्वात् । छः षत्वमित्यक्ङिति झलादौ षत्वार्थं व्रश्चभ्रस्जेत्यत्र छग्रहणं कर्तव्यम् । क्ङिदधिकाराभावे तु झलादिमात्रे छः षत्वं शकारान्तत्वादेव सिद्ध्यतीत्यर्थः । यदि च वकारान्तानामपि यङ्लुक्स्यात्तत्रापि क्ङिद्ग्रहणानुवृत्तौ ऊठा न भाव्यमन्यदा तु भाव्यमिति विशेषस्य विद्यमानत्वात् 'तत्र त्वेतावान् विशेषः' इत्यादि भाष्यं कथं सङ्गच्छेत । स्पष्टं चैतत्तत्र कैयटे ॥

देवते—इत्यादि पूर्ववत् ॥

आदेवकः—'देविक्रुशोश्चोपसर्गे' इति तच्छीलादौ वुन् ॥

देवरः—'अर्तिकमिचमिभ्रमिदेविपाशिभ्यश्च' इत्यरः ॥

देवलः—'कपिलकादीनां संज्ञाछन्दसोः' इति वा लत्वम् । यद्वा—देवान् लाति आदत्ते इति देवलः—अनयोः क्विपि वलिलोपात्परत्वात् छ्वोः शूडित्यूठ्ययादेशो तयूः दयूः इति भवति । एवमन्यत्रापि वकारान्तेषु ॥

दिवीति प्रीणनार्थोऽग्रे परस्मैपदी । दिवु इति क्रीडार्थो दिवादिः । परिपूजनार्थश्चुरादिः ॥

देवृ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ सेवने ॥ ४९४-४९९ ॥

खेवृ प्लेवृ इत्यप्येके इति मैत्रेयः ॥

सेवते । सिषेवे । सेवितेत्यादि ॥

सिसेविषते—'स्तौतिण्योरेव' इत्यषत्वम् ॥

सेषेव्यते । सेवयति । असिषेवत् । एषां सर्वेषामृदित्वात् 'णौ चङि' इति न ह्रस्वः ॥

परिषेवते— 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' इति षत्वं 'सात्पदाद्योः' इति निषेधापवादः । 'प्राक्सितादड्व्यवायेऽपि' इति वचनात् पर्यषेवतेत्यादावपि भवति ॥

परिषिषेविषते इत्यत्र षणीति नियमः 'स्थादिष्वभ्यासेन चाभ्यासस्य' इत्यनेन बाध्यते । एवं निविभ्यामप्युदाहार्यम् ।

सेवित्वा । सेवितः ॥

क्विपि—स्यूः ॥

अत्र मैत्रेयादयो दन्त्यादिमपि पठन्ति । तथा 'परिनिविभ्यः सेव' इत्यत्र न्यासेऽपि षोपदेशस्य सात्पदाद्योरिति निषेधे प्राप्ते अपरस्य त्वप्राप्त एवेति । तदिदं षोपदेशलक्षणपर्युदासे 'स्त्यासेक्सृवर्जं' इति स्त्यायतिवत् अनुपादानाद्भाष्यकारस्य अनभिमतमिव प्रतीयते । अत एव 'परिनिविभ्यः' इत्यत्र हरदत्तः—सेवेति भूवादिष्वनुदात्तेदित्याह, न तु सेवतीति ॥

गेवते । ग्लेवते । प्लेवते । मेवते । म्लेवते । खेवते । प्लेवते ॥

एवृ शेवृ केवृ इत्यपि क्वचित्पठ्यते ॥

**रेवृ प्लवगतौ ॥ ५०० ॥**

प्लवगतिः प्लुतगतिः । रेवते इत्यादि ॥

रेवा—अचि टाप् ॥

रेवणः—अनुदात्तेत्त्वाद्वा चलनार्थत्वाद्वा युच् ॥

अत्र मैत्रेयः—प्लुव इति धात्वन्तरमाह । तच्चिन्त्यम् । यदि हि स्यात् आप्लावशब्दस्य अस्मात् घञि सिद्धौ तदर्थं 'विभाषाऽङि रूप्लुवोः' इति प्लुवः पक्षे घञ्विधानमनर्थकं स्यात् । तथा प्लुङो णौ वृद्ध्यावादेशयोः चङि णौ कृतस्य स्थानिवत्त्वात् प्लुशब्दस्य द्विरुक्तौ अपुप्लुवत् इति नित्ये प्राप्ते पक्षे अपिप्लवदिति सिद्ध्यर्थं 'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' इत्युकारस्येत्त्वविधानमनर्थकं स्यादिति । सति ह्यस्मिन्ननेनैव अपिप्लवत् इति भविष्यति । अत एव किल अपरितुष्यन् मैत्रेयोऽपि प्लुव इत्येक इत्याह ॥

आयादय उदात्ता अनुदात्तेतः ।

**मव्य बन्धने ॥ ५०१ ॥**

एतदादयो वत्यन्ता उदात्तेतः ॥

मव्यति । ममव्य । ममव्यिथ । मव्यिता । मव्यिष्यति । मव्यतु । अमव्यत् । मव्येत् । आशिषि—मव्यात् । 'हलो यमां यमि लोपः' इति वा यलोपः । अमव्यीत्—'नेटि' इति न वृद्धिः । 'ह्म्यन्त' इति वा ॥

मिमव्यिषति । मामव्यते ॥

अत्र तृजादौ—यदा ‘हलो यमाम्’, इति धातुयकारस्य लोपः तदार्धधातुकमाश्रित्यातो लोपः । ‘यस्य हलः’ इति यङोपि लोपे मामविता इत्यादि । यदा ‘हलो यमाम्’ इति न भवति तदा पूर्ववद्यङो लोपे मामव्यिता इत्यादि । मामव्यीति, मामति । ईडभावे ‘लोपो व्योर्वलि’ इति व्योर्लोपः । मामौतः—यलोपे वकारस्य अङ्गान्तरत्वात् वलिलोपापवादत्वात् बाधित्वा ऊठि वृद्धिः । मामव्यति—अङ्भावो नित्यत्वाद्वलि लोपं बाधते । मामव्यीषि, मामसि—व्योर्लोपः ॥

मामौढः । ममौथ । मामौवः । यलोपे ऊठि वृद्धिः ॥

मामव्यीमि, मामौमि—अनुनासिकत्वादूठि वृद्धिः ॥ मामौवः व्योर्लोपः । ‘अतो दीर्घो यञि’ इति दीर्घः । मामौमः । मामव्यीतु, मामतु, मामतात् । मामौताम् । मामव्यतु । माम, मामतात् । मामौतम् । मामौत । मामव्यानि । मामव्याव । उत्वहित्वाभ्यां परत्वात्पूर्वमेव व्योर्लोपे पश्चात् ‘तुह्योः’ इति तातङिते तद्वाश्रय ऊठत्र नाशङ्कनीयः, पूर्वमेव वकारस्य लुप्तत्वात् । हेस्तु ‘अतो हेः’ इति लुक् । उत्तमे नित्यत्वात् आटि न व्योर्लोपः । अमामव्यीत् । अमामत् । अमामौताम् । अमामव्युः । अमामः । अमामव्यम् । अमामौव । अमामौम । तिप्सिपोर्हल्ङ्यादिलोपात् अन्तरङ्गत्वात् वलिलोपः । झिमिपोः जुसभावाम्भावौ वलि लोपं नित्यत्वात् बाधते । वसि व्योर्लोपे ‘अतो दीर्घो यञि’ इति दीर्घः । मसि यलोपे अनुनासिकादित्वादूठि वृद्धिः ॥

मव्ययति । अममव्यत् ।

मव्यित्वा । मव्यितः ॥

क्विपि—'लोपो व्योर्वलि' इति विधेयस्य लोपस्य पूर्वनिर्देशात् वेरपृक्तलोपाद्वलोपस्य बलीयस्त्वस्य ज्ञापनादपृक्तलोपात् पूर्वं यकारस्य वलि लोपः। वकारस्य त्वपवादेन ऊठा बाधान्न भवातीति ऊठ्वृद्ध्योः—मौः ॥

यथा तु भाष्यं तथाऽस्य न यङ्लुगस्ति। तच्च तेवतावुक्तमुपपादितं च।

अथापि शिष्यबोधाय प्रक्रियेयं प्रपञ्चिता।

यज्ञनारायणार्येण बुद्ध्यन्तां भाष्यपारगाः ॥

सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः ॥ ५०२-५०४ ॥

सूर्क्ष्यति। सुसूर्क्ष्य। सूर्क्ष्यिता। सूर्क्ष्यिष्यति। सूर्क्ष्यतु। असूर्क्ष्यत्। सूर्क्ष्येत्। आशिषि—सूर्क्ष्यात्। असूर्क्ष्यीत्। असुसूर्क्ष्यिष्यत् ॥

सुसूर्क्ष्यिषति—'स्तौतिण्योरेव' इति नियमान्न षत्वम् ॥

सोसूर्क्ष्यते—'हलो यमां' इति पक्षे यलोपः। अन्यदा तु यकारद्वयम् ॥

सोसूर्क्ष्यीति, सोसूर्ष्टि। बहूनां समवाये द्वयोरपि संयोगसंज्ञायाः स्थितत्वात् 'स्कोः' इति कलोपः ॥

लङि तिप्सिपोर्हल्ङ्यादिलोपे पदान्तसंयोगादित्वात् कलोपे जश्त्वचर्त्वयोः—असोसूर्ट्, असोसूर्ड्। सर्वत्र यकारस्य वलि लोपः ॥

सूर्क्ष्ययति। असुसूर्क्ष्यत् ॥

सूर्क्ष आदर इत्यन्ये ॥

ईक्ष्यंति । ईक्ष्यांञ्चकार । ईक्ष्यिता । ईक्ष्यिष्यति । ईक्ष्यंतु । ऐक्ष्यंत् । ईक्ष्येंत् । ईक्ष्यांत् । ऐक्ष्यींत् । ऐक्ष्यिष्यत ।।

ईर्चिक्ष्यिषति । 'न न्द्राः' रेफवर्जस्य द्विर्वचने हलादिशेषे चर्त्वम् ।।

इक्ष्यंयति ऐर्चिक्ष्यत् ।।

ईर्ष्यति । ईर्ष्यांञ्चकार । ईर्ष्यितेत्यादि ।

सनि 'ईर्ष्यतेः तृतीयस्य द्वे भवतः इति वक्तव्यम्' इत्यत्र वृत्तौ 'कस्य तृतीयस्य ? केचिदाहुर्व्यञ्जनस्य । अपरे पुनराहुः तृतीयस्यैकाच इति व्याचक्षते' इति । तत्र तृतीयस्य व्यञ्जनस्येति पक्षे यकारादे-द्विर्तीयस्यैकाचो द्विर्वचने ईर्ष्यियिषति । पक्षान्तरे तु तृतीयस्यैकाचः सन एव द्विर्वचने ईर्ष्यिषिषति इति भवति ।।

ईर्ष्ययति । ऐर्षिष्यत् ।

ईर्ष्या—'गुरोश्च हलः' इत्यकारप्रत्ययः ।

एषामीर्ष्यार्थत्वात् 'क्रुधद्रुह' इति कोपविषयस्य सम्प्रदानत्वा-च्चतुर्थी—देवदत्ताय सूक्ष्यंतीत्यादि ।।

क्विपि—वलि लोपेऽपृक्तलोपे च पदान्तसंयोगादित्वात् 'स्कोः' इति कलोपे जश्त्वचर्त्वयोः—सूर्ट् । 'रात्सस्य' इति नियमान्न संयोगा-न्तलोपः ।।

एवमीक्ष्यंतेरपि ईर्ट् । ईर्ष्यतेरपीदमेव रूपम् ।।

**हय गतौ ।। ५०५ ।।**

भक्तिशब्दयोरपीति केचित् । हयति । जहाय । जहयिथ । हयिता ।।

अहयीत्—' ह्मयन्त ' इति न वृद्धिः ॥

जिहयिषति । जाहय्यते । जाहयीति, जाहति । जाहतः । जाहयति—अदादेशो वलि लोपान्नित्य इत्युक्तम् । जाहसि । जाहामि—वलोपे ' अतो दीर्घो यञि ' इति दीर्घः ॥

हाययति । अजीहयत् ॥

हयित्वा ॥

हयतेः क्वौ वलि लोपे तुकि—हत् हतौ हतः इति भवति अतो लोपो नेत्ययत उक्तम् ॥

हयः ॥

हयी—वडवा । गौरादित्वात् ङीप् ॥

## शुच्य अभिषवे ॥ ५०६ ॥

अवयवानां शिथिलीकरणं सुरायास्सन्धानं वा अभिषवः । यथा ' सोममभिषुणोति ऋजीषमभिषुणोति ' इति । सुराप्रकरणे च ' सन्धानं स्यादभिषवः ' इति । अभिषवः स्नानमिति चन्द्रः ॥

शुच्यति । शुशुच्य । शुच्यिता ॥

शुशुच्यिषति । शोशुच्यते । ' हलो यमां ' इति यलोपपक्षे अतो लोपे ' यस्य हलः ' इति चार्धधातुके यशब्दलोपे ' न धातुलोप ' इति वाऽल्लोपस्य असिद्धत्वात् स्थानिवत्त्वाद्वा गुणाभावे—शोशुचिता । यमो लोपाभावे तु शोशुच्यिता ॥

शोशुच्यीति, शोशोक्ति—वलि लोपे लघूपधत्वाद्गुणः । यङ्लुकोऽनैमित्तिकत्वात् गुणस्यानार्धधातुकनिमित्तत्वाद्वा ' न धातुलोप '

इति निषेधाभावः । शोशुक्तः । शोशुच्यति । शोशुच्यीषि, शोशोक्षि । शोशुच्यीमि, शोशुच्मि । शोशुच्वः । शोशोक्तु । शोशुग्धि—हेर्धित्वे 'चोः कुः' इति चकारस्य ककारे 'झलाञ्जश् झशि' इति जश्त्वं गकारः । अशोशुच्युः, इत्यत्र वलिलोपान्नित्यत्वाज्जुस्भावः । इगन्तविषयत्वात् जुसि गुणो न भवति । अशोशुच्यम्—नित्यत्वात् वलि लोपात्पूर्वमम्भावः ॥

शुच्ययति । अशुशुच्यत् ॥

शुच्यित्वा । शुच्यितः ॥

शुक्तिः—इत्यत्र 'तितुत्र' इत्यनिट्त्वम् ॥

शुभ्य इत्यपि पठन्तीति मैत्रेयः । शुभ्यतीत्यादि ॥

## हर्य गतिकान्त्योः ॥ ५०७ ॥

हर्यति । जहर्य । हर्यिता । अहर्यीत्—'नेटि' इति न वृद्धिः ॥

जिहर्यिषति । जाहर्यते—पूर्ववदार्धधातुके यमो यमि लोपे यलोपालोपाभ्यां जाहर्ता । अन्यदा जाहर्यिता । इत्यादि ॥

जाहर्यीति, जाहर्ति । जाहर्तः । जाहर्यति । जाहर्षि—'शरोऽचि' अचो रहाभ्यां शरोऽचि न द्वित्वमिति षकारस्य द्वित्वाभावः । जाहर्मि—लोटि जाहर्हि । जाहर्याणि इत्यत्र नित्यत्वात् आट् वलि लोपं बाधते ॥

अजाहर्यीत् । ईडभावे वलिलोपहल्ङ्यादिलोपयोः अजहः । अजाहर्ताम् । अजाहर्युः । अजाहर्यम् ।

हर्ययति । अजहर्यत् ॥

हर्यित्वा । हर्यितः ॥

हर्या—स्त्रियामकारः ॥

क्विपि—वलि लोपे हः ॥

हर्यतो यज्ञः—'भृदृशियजिपर्विपच्यमिनमिहर्येभ्योतच्' इत्यतच् ॥

## अल भूषणपर्याप्तिवारणेषु ॥ ५०८ ॥

अलति । आल । अलिता ॥

मा भवानालीत्—'अतो ल्रान्तस्य' अकारसमीपरेफलकारान्ताद्धातोः परस्मैपदपरे सेटि सिचि अतो वृद्धिरिति वृद्धिः ॥

अलिलिषति । आलयति । आलिलत् ॥

अलित्वा । अलितः ॥

अलकम्—संज्ञायां कन् ॥

अलका—टापि प्रत्ययस्थादितीत्वम् क्षिपकादित्वान्न भवति ॥

आलिः—'इञ् वपादिभ्यः इतीञ् ॥

आली—कृदिकारत्वात् ङीष् ॥

अत्र मैत्रेयः 'अकारमनुनासिकं स्वरितमिच्छन्ति' इत्याह । तत्र अलते—इत्यादि ॥

## ञि फला विशरणे ॥ ५०९ ॥

ञीत्त्वं तु—ञितः क्तः' इति वर्तमानक्तार्थम् ॥

फलति । पफाल । फेलतुः—'तॄफलभजत्रपश्च' इति किति

लिटि थलि च सेट्येत्वाभ्यासलोपौ । निरनुबन्धकपरिभाषायाः प्रत्यय-ग्रहणविषयत्वादस्यापि तत्र ग्रहणम् । न केवलं फल निष्पत्तावित्यस्यैव । अन्ये तु—इयं परिभाषा सार्वत्रिकीति भजत्रपश्चेति चग्रहणेन सानुबन्धकममुं समुच्चिन्वन्ति । उभयथा रूपे न विवादः ॥

फलिता इत्यादि । अफालीत् इत्यत्र 'अतो ल्रान्तस्य' इति वृद्धिः ॥

पिफलिषति ॥

पम्फुलयते । पम्फुलीति, पम्फुल्ति । पम्फुल्तः । पम्फुलिम—'चरफलोश्च' इति यङि यङ्लुकि अभ्यासस्य नुक् । अत्रापि पूर्ववत्सानु-बन्धकस्यास्यापि ग्रहः । 'उत्परस्यातः' इत्यभ्यासात्परस्य चरफलयोरका-रस्योत्वम् । तपरकरणं लघूपधगुणनिवृत्त्यर्थम् ॥

फालयति । अपीफलत् ॥

फलम्—अच् ॥

फलित्वा ॥

फुल्लः—अस्याकर्मकत्वात् कर्तृभावाधिकरणेषु क्ते 'आदितश्च' इति निषेधे 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निपातनात् निष्ठात-कारस्य लत्वम् । अत एव निपातनादुत्वं च । यद्वा—लत्वस्यासिद्ध-त्वात् तकारादिप्रत्ययपरत्वात् 'ति च' इत्युत्वम् । 'आदितश्च' इति निषेधस्य 'विभाषा भावादिकर्मणोः' इति विकल्पनात् फलितं इत्यपि भवति । 'अनुपसर्गात्' इति वचनात् उपसृष्टस्योत्वे लत्वाभावात् प्रफुल्तं; इति भवति । समुत्पूर्वत्वे तु 'उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानम्' इति लत्वम् । क्तवतोरप्येतल्लत्वमिष्यते इति वृत्तिः । तेन फुल्लवान्

इति भवति ॥

फल्गुः—फलिपाटीत्यादिनोप्रत्यये गुगागमः ॥

क्विपि—फलतीति फल् ।

फलिवाचरतीति 'सर्वप्रातिपदिकेभ्यः' इति क्विपि फलो धातुत्वे—फलति । पफाल । फेलतुः । फेलुः । पम्फुल्यते । इत्यादि प्रकृतिवत् । प्रत्ययान्तधातुत्वे आम् न भवति, 'कास्यनेकाचः' इत्युक्तत्वात् ॥

निष्ठायाम्—फलितम् इति नित्यमिडेव, आदित्त्वाभावात् ॥

**मील श्मील स्मील क्ष्मील निमेषणे ॥ ५१०-५१३ ॥**

निमेषणं सङ्कोचः । द्वितीयस्तालव्यादिः । तृतीयो दन्त्यादिः ॥

मीलति । मिमील । मीलिता । इत्यादि ॥

मिमीलिषति । मेमील्यते । मेमीलीति, मेमील्ति ॥

मीलयति । अमीमिलत् । अमिमीलत् । 'भ्राज भास' इत्यादिना णौ चङ्युपधाया ह्रस्वविकल्पः ॥

श्मीलति । स्मीलति । क्ष्मीलतीत्यादि ॥

मिल श्लेषणे, इति ह्रस्वोपधस्तुदादौ ॥

**पील प्रतिष्टम्भे ॥ ५१४ ॥**

प्रतिष्टम्भो रोधनम् । पीलति । पिपील । पीलिता । इत्यादि ॥

पीला नाम काचित्—इगुपधलक्षणे कप्रत्यये टाप् ।।

पीलाया अपत्यं पैलः—'पीलाया वा' इत्यण् । तदभावे 'द्व्यचः' इति ढक् पैलेयः ।।

अणन्ताद्यून्यपत्ये वा अत इञि तस्य 'पैलादिभ्यश्च' इति लुकि पैलः पिता पैलः पुत्रः ।।

पीलुः—'मृगय्वादिभ्यश्च' इत्युप्रत्ययः ।।

पीलोः पाकः पीलुकुणः—'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' इति षष्ठ्यन्तात् पील्वादेः कर्णादेश्च यथासङ्ख्यम्, पाकमूलयोः कुणब्जाहचोर्विधानात् अस्मात् कुणप् । ककारस्य 'लशक्वतद्धिते' इति तद्धितत्वात् नेत्त्वम् ।।

णील वर्णे ।। ५१५ ।।

नीलति । प्रणीलति । निनील । नीलिता । इत्यादि ।।

नीलः – इगुपधलक्षणः कः ।।

नीली—औषधिः, वडवा च । 'जानपद' इत्यत्र 'नीला-दोषधौ' 'प्राणिनि च' इति ङीष् । अन्यत्र नीला शाटी । जानपदाभावे च संज्ञायां वेति वचनात् संज्ञायां नीली, नीला, इत्युभयमपि भवति ।।

नील्या रक्तं वस्त्रं नीलम्—'तेन रक्तं रागात्' रज्यतेऽनेनेति रागः । शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थ इति वृत्तिः । रागविशेषवचनात्तृतीयान्तात् रक्तार्थे यथाविहितं प्रत्यय इति अणि प्राप्ते 'नील्या अन्वक्तव्यः' इत्यन् ।।

णिल गहन इति ह्रस्वोपधस्तुदादौ ।।

**शील समाधौ ।। ५१३ ।।**

शीलतीत्यादि ।।

शीलम्—इगुपधलक्षणः कः । घञ् वा ।।

शीले समाधाने भवा प्रवृत्तिः शैली । अणि ङीप् ।।

शील उपधारणे, इति चुरादौ । शिल उञ्छे इति ह्रस्वोपधस्तुदादौ ।।

**कील बन्धने ।। ५१७ ।।**

कीलतीत्यादि ।।

कीलः—इगुपधलक्षणः कः । 'हलश्च' इति घञ वा ।।

कीलकम्—कन् । संज्ञायां कुन्वा ।।

**कूल आवरणे ।। ५१८ ।।**

कूलति । इत्यादि ।।

कूलम्—पूर्ववत्कः ।।

**शूल रुजायां सङ्घाते च ।। ५१९ ।।**

शूलति ।।

शूलम् ।।

शूले संस्कृतं शूल्यम्—'शूलोखाद्यत्' इति सप्तम्यन्तात् संस्कृतमित्यर्थे यत् ।।

शूले पचति शूलाकरोति—शूले प्रोय पचतीत्यर्थः । 'शूलात्पाके' इति कृञा योगे डाच् । डाचि बहुलं द्वे भवतः'

इति द्वित्वं अव्यक्तानुकरणस्य डाजन्तस्य नेष्यते इत्युक्तत्वान्न भवति । 'ऊर्यादिच्विडाचश्च' इति डाजन्तस्य निपातत्वं गतित्वं च । तत्र निपातत्वे अव्ययत्वात्सोर्लुक् ॥

गतित्वात् शूलाकृत्य इत्यत्र 'कुगतिप्रादयः' इति समासे क्त्वो ल्यप् ॥

अयश्शूलेनान्विच्छति आयश्शूलिकः—'अयश्शूलदण्डाजिनाभ्यां ठक्ठञौ' इति तृतीयान्तादस्मात् अन्विच्छतीत्यर्थे यथासङ्ख्यं ठक् । अयश्शूलशब्देन क्रूराचार उच्यते ॥

**तूल निष्कर्षे ॥ ५२० ॥**

निष्कर्षो निष्कोषणम् । तच्चान्तर्गतस्य बहिर्निस्सारणम् ।

तूलति ॥

तुलम् ॥

तूलैरनुकुष्णाति अनुतूलयति—'सत्यापपाश' इत्यादिना णिचि टिलोपः । णौ चङि अग्लोपित्वात् अतूतुलत् ॥

**पूल सङ्घाते ॥ ५२१ ॥**

पूलति ॥

पूलः ॥

**मूल प्रतिष्ठायाम् ॥ ५२२ ॥**

मूलति । मुमूल । मूलिता इत्यादि ॥

मूलम् ।

मूले जातो मूलकः—'पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्' इति

तत्र जात इति विषये वुन् । नक्षत्राणोऽपवादः ॥

उत्पाटनीयं मूलमस्येति मूल्यो मुद्गः—'मूलमस्यावर्हि' इत्यौपाधिकात्प्रथमान्तात् मूलादस्येत्यर्थे यत् । आबर्हि. इति वृह उद्यमन इत्यस्मात् भावे घञ्। बर्हिः । सोऽस्यास्तीतीनिः । उद्यमनमिहोत्पाटनम् । ये सुपक्वा मूलोत्पाटनमन्तरेण ग्रहीतुं न शक्यन्ते इति ते एवमुच्यन्ते । मुद्गादिषु मध्यतो लूयमानेषु कोशा अपि लूयेरन्निति अवश्यमेषां मूलमुत्पाटनीयम् ॥

मूलेनानाम्यं मूल्यम् लाभाख्यं द्रव्यम्—'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु' इति यथासङ्ख्यं मूलात् आनाम्ये यत् । आनाम्यमभिभवनीयं शेषीक्रियमाणमित्यर्थः । मूलं नाम पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यम् । तेन हि स्वस्मादतिरिक्तं लाभाख्यं द्रव्यं शेषीक्रियते आत्मन उपकारकं क्रियते । यतः स्वयं तेन सगुणम् । गुणो भागः । इदमेव मूलस्य सभागीकरणं, तत्प्रति मूलस्योपकारकत्वं शेषत्वमानाम्यत्वं च ॥

मूलेन समो मूल्यः पटः । उपादानसमानफल इत्यर्थः । अनेनैव सूत्रेण तृतीयान्तात् मूलात्समे यत् ॥

न विद्यते मूलमस्याः सा अमूला—'पाककर्ण' इत्यादिना प्राप्तं ङीपं बाधित्वा 'मूलान्नञः' इत्यजादिपाठाट्टाप्

शतमूली—'पाककर्ण' इत्यादिना ङीप् ।

अयं रोहणार्थश्चुरादिः ॥

**फल निष्पत्तौ ॥ ५२३ ॥**

फलतीत्यादि । ञिफलावत् ॥

फलितमिति निष्ठायामिडेव ॥

फलतीति फलम् ॥

सम्फला—पाककर्णेति ङीपं बाधित्वा 'सम्भस्त्राजिनशणपिण्डेभ्यः फलात्' इति अजादिपाठात् टाप् । भस्त्रफलादयोप्येवम्—'ङ्यापोस्संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः ॥

अल्पं फलं फलिका । ततोऽन्यत्फलम् । फलं च तत्फलिका च फलाफलिका 'कृतापकृतादीनामुपसङ्ख्यानम्' इति कर्मधारयः । 'अन्येषामपि दृश्यते' इति दीर्घः पूर्वपदस्य । एकमेव फलमवस्थाभेदादल्पत्वमहत्त्वाभ्यां युज्यते ॥

त्रिफला—अजादिदर्शनाट्टाप् ॥

फलिनः—'फलबर्हाभ्यामिनज्वक्तव्यः' इति मत्वर्थे इनच् ॥

फलकम्—संज्ञायां कन् ॥

निष्पाद्यते कृषिरनेनेति फालः—'हलश्च' इति करणे घञ् ॥

## चुल्ल भावकरणे ॥ ५२४ ॥

भावकरणमभिप्रायाविष्कारः ॥

चुल्लिः, चुल्ली—इनन्तत्वाद्वा ङीष् ॥

## फुल्ल विकसने ॥ ५२५ ॥

फुल्लति ॥

फुल्लः—अच् ॥

फुल्लित्वा । फुल्लितः ॥

41

चिल्ल शैथिल्ये भावकरणे च ॥ ५२६ ॥

चिल्लति । चिल्लः ॥

तिल गतौ इति दुर्गमैत्रेयौ । तिल्लेत्येके ।

तेलति । इत्यादि ॥

तिलः—इगुपधलक्षणः कः ' तिल स्नेहने इति तौदादिकाद्वा ॥

तिलानां भवनं क्षेत्रं तिल्यम् । तैलीनम्—' विभाषा तिल ' इति यत्खञौ ॥

तिलेभ्यो हितं तिल्यम्—' खलयवमाषतिलवृषब्रह्मणश्च ' इति चतुर्थ्यन्तात् हितार्थे यत् ॥

निष्फलस्तिलः तिलपेजः तिलपिञ्जः—' तिलान्निष्फलात्पिञ्जपेजौ ' इति तौ ॥

तिलकम्—संज्ञायां कुन् ॥

तिल स्नेहने, इति चुरादौ च ॥

वेल्लृ चेल केल खेल वेल्ल चलने ॥ ५२७-५३१ ॥

वेलति । इत्यादि ॥

वेला—' गुरोश्च ' इत्यकारः ॥

चेलति । चेलः—पचादौ चेलडिति पाठात् अच्, टित्त्वं स्त्रियां ङीबर्थम् ॥

चिल वसने इत्यस्मात् चेलम् ॥

प्रसङ्गादत्र किञ्चिदुच्यते—कुत्सिता ब्राह्मणी ब्राह्मणिचेली, इति 'कुत्सितानि कुत्सनैः' कुत्साहेतुधर्मवचनैः समानाधिकरणैस्समस्यन्ते इति तत्पुरुषः। 'घरूप' इत्यादिना ह्रस्वः। चेलादयो वृत्तिविषये कुत्सन-वचना इति भवतावुक्तम्। तत्र चेलमकुलीनेन तन्तुवायेनोत्पादितं भवति। तस्माद्दृश्यादृब्राह्मण्यादिषु वृत्त्या चेलशब्दस्य कुत्सनवचनत्वम्। स्त्रिचेली, स्त्रीचेली वा। वामोरुचेली' वामोरूचेली वा, 'नद्याश्शेषस्यान्यतरस्याम्' इति ह्रस्वविकल्पः। अङी च या नदी ङ्यन्तं च यदेकाच्, स शेषः, तस्य घादिषु वा ह्रस्वः इति सूत्रार्थः। अत्र अन्तरेणापि शेषग्रहणं पूर्वसूत्रव्यतिरिक्तविषयत्वे सिद्धे तत्सामर्थ्यात्पूर्वश्रुतङ्यन्तानेकाजपेक्षं शेषत्वं बोधयितुम्। तेन यद्यङ्यन्तमनेकाच्च ङ्यन्तमेकाच तत्रैवायं विकल्प इति, यदभाषितपुंस्कमामलक्यादि यच्च समानायामाकृतौ अभाषितपुंस्कं द्रोण्यादिपूर्वसूत्राविषयं तत्र न भवति। लक्ष्मीचेली। यवागूचेली। इत्यादौ च ङ्यन्तनदीत्वेऽपि 'कृन्नद्याः प्रतिषेधः' इत्युक्तत्वान्नायं विधिर्भ-वति। श्रीचेली इत्यादौ तु नदीग्रहणान्नास्य प्रसङ्गः। नापि पूर्वसूत्रस्य, ङ्यन्तानेकाच्त्वाभावात्। विदुषीचेली इत्यादौ—'उगितःपरा या नदी तस्या ह्रस्वविकल्पः। 'विद्वच्छ्रेयसोः पुंवद्भावोऽत्र पक्षे वक्तव्यः' इति वृत्तावुक्तत्वात् विद्वच्चेली इत्यपि भवति॥

केलति॥

केलिः। इन्प्रत्यये केली॥

अप्रत्ययः। केला॥

केलयति—'कण्ड्वादिभ्यो यक्' इति स्वार्थे यकि सनाद्यन्तत्वेन धातुत्वे लडादि॥

खेलति । खेला । अयमपि कण्ड्वादिः ॥

वेल्लति ॥

वेल्लो विषम् । संज्ञायां घञ् ॥

वेल्लयति ॥

वेल्लादीनां पञ्चानामृदित्वात् 'णौ चङि' इति ह्रस्वाभावात् अविवेलत्—इति भवति ॥

वेल्लेस्त्वनुपधात्वान्न ह्रस्वप्रसङ्गः ॥

पेल शेल फेल गतौ ॥ ५३२-५३४ ॥

पेलति । अपिपेलत् ॥

पेला—भुक्तसमुज्झितम् ॥

शेलति । अशिशेलत् ॥

अत्र क्वचित्—खल पेल, श्मेल, इत्यपि त्रयः पठ्यन्ते ॥

तत्र खेलतिः मैत्रेयाद्यनुसारेणाग्रे पठिष्यते । सेलतेस्तु दन्त्यादेः पाठः षोपदेशपर्युदासवाक्येऽनुपादानादनार्षः । मूर्धन्यादिस्तु सेलुः श्लेष्मातक इत्यादिदर्शनात् ग्राह्यः ॥

स्खल सञ्चलने ॥ ५३५ ॥

स्खलति । चस्खाल । अस्खालीत् ॥

णौ घटादित्वात् स्खलयति ॥

खल सञ्चये ॥ ५३६ ॥

खलति चखाल । अखालीत् ॥

खलति पापानि सञ्चिनोतीति खलः—अच् ॥

खल्यते सञ्चीयतेऽत्र धान्यादिकमिति खलम् । 'खनो घ च' इत्यत्र वृत्तिः—खलं भगः पदं चेति वक्तव्यमिति । अत्र हरदत्तः—घित्करणसामर्थ्यादन्येभ्योऽप्ययं भवति, न हि खनः कश्चिदवयवः कुत्वभागस्ति ॥

खलानां समूहः खल्या—'खलगोरथात्' इति षष्ठ्यन्तात् समूहे यः ॥

खलिनी—'इनित्रकट्यचश्च' इति पूर्वत्रैव विषये इन्यादिविधानादिह यथासङ्ख्यादिनिः । सर्व एते यादयः स्वभावात् स्त्रीविषयाः ॥

खलाय हितम् खल्यम्—'खलयव' इति यत् ॥

यस्मिन्काले खले यवा भवन्ति स कालो खलेयवम् । एवं खलेबुसम् । 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावः । तत्र ह्येवं पठ्यते खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण न सम्बध्यन्ते अन्यपदार्थे च वर्तन्त इति । तेनैतौ प्रथमान्तावेव । अव्ययीभावत्वात् 'अव्ययीभावश्च' इति नपुंसकत्वम् ॥

खलन्ति सञ्चलन्ति केशा अस्मादिति खलतिः । अयं च भीमादिषु पाठात् 'भीमादयोऽपादाने' इत्यपादानविषयः । अत्रैव पाठादेवातिप्रत्ययः । धातूनामनेकार्थत्वात्सञ्चलने वृत्तिः । यद्वा पूर्वस्यैव धातोः भीमादिषु पाठात् सलोपः ॥

खलतः इत्यप्यतचि निपातितः । शाल्यम्, शाठ्यम्, शिरोमध्यं च ॥

गल अदने ॥ ५३७ ॥

गलति । अगालीत् ॥

गलः—'गोचरसञ्चर' इत्यादौ चकारेण पुंसि संज्ञाया घः। गिरतेर्वा ॥

षल गतौ ॥ ५३८ ॥

सलति ॥

सालयति । असीषलत् ॥

सालः—'अकर्तरि च कारके' इति संज्ञायां घञ् ॥

सलिलम्—'सलिकलि' इत्यादिनेलच ॥

दल विशरणे* ॥ ५३९ ॥

दलति ॥

णौ घटादित्वात् दलयति ॥

दाडिमम्—दालशब्दात् घञन्तात्, 'तेन निर्वृत्तं' इत्यत्र विषये 'भावप्रत्ययान्तादिमज्वक्तव्यः' इतीमच् । डलयोश्चाभेदः ॥

कुं दालतीति कुद्दालः । पृषोदरादिः । अयं घटादावपि ॥

श्वल श्वल्ल आशुगमने ॥ ५४०–५४१ ॥

श्वलति । शश्वाल । अश्वालीत् ॥

शिश्वलिषति । शाश्वल्यते ॥

श्वालयति । अशिश्वलत् ॥

श्वल्लति । अश्वल्लत् । अश्वल्लीत्—अत्र अङ्गान्त्यस्य लकारस्य अकारसमीपत्वाभावात् 'अतो ल्रान्तस्य' इति वृद्धिर्न भवति ॥

* विदारणे ।

**खोलृ खोरृ गतिप्रतिघाते ।। ५४२-५४३ ।।**

खोलति । चुखोल । खोलिता ।।

खोलयति । अचुखोलत्—ऋदित्त्वान्नोपधाह्रस्वः ।।

खोडः—खञ्जः । पचाद्यच् । लडयोरभेदः ।।

एवं खोरति – इत्यादि ।।

**घोरृ गतिचातुर्ये ।। ५४४ ।।**

घोरति । घोरिता । अदुघोरत् ।।

घोरितकम्—अश्वानां गतिविशेषः । निष्ठान्तात् संज्ञायां कन् ।।

**त्सर छद्मगतौ ।। ५४५ ।।**

त्सरति । तत्सार । तत्सरतुः । त्सरिता । अत्सारीत्—'अतो ल्रान्तस्य' इति वृद्धिः ।।

तित्सरिषति । तात्सर्यते । तात्सरीति, तात्सर्ति तात्सर्षि । अतात्सः ।।

त्सरुः—'भृमृशीतृचरित्सरितनिधनिमस्जिभ्य उः' इत्युप्रत्ययः ।।

त्सरौ कुशलः त्सरुकः—'आकर्षादिभ्यः कन्' इति सप्तम्यन्तात्कुशल इत्यर्थे कन् ।।

**क्मर हूर्छने ।। ५४६ ।।**

क्मरति चक्मार । क्मरिता । अक्मारीत् । इत्यादि पूर्ववत् ।।

अभ्र वभ्र मभ्र चर गत्यर्थाः ॥ ५४७-५५० ॥

चरतिर्भक्षणार्थेऽपि । अभ्रति । आनभ्र । अभ्रिता ।

मा भवानभ्रीत्—अङ्गान्त्यस्य रेफस्य अकारसमीपत्वाभावात् 'अतो ल्रान्तस्य' इति न वृद्धिः ॥

अबिभ्रिषति ॥

अभ्रयति । अबिभ्रत् ॥

अभ्रयते—इत्यत्र रेफस्य हलः परत्वात् यम्परत्वाच्च, 'हलो यमाम्' इति पाक्षिको लोपो न भवति, तत्र यथासङ्ख्याश्रयणात् । तथा चोत्तरसूत्रे सवर्णग्रहणमर्थवत् । उक्तं च वृत्त्यादौ सवर्णग्रहणस्य फलं 'शिण्ढि' इत्यादौ यथासङ्ख्यनिरासः ॥

अभ्रम्—अच् । भृञो वा व्युत्पादयिष्यते ॥

अभ्रिः—इनन्तः । काष्ठकुद्दालः ॥

अभ्रकम्—संज्ञायां क्वुन् ॥

वभ्रति । ववभ्र । वभ्रिता ।

विवभ्रिषति । वावभ्रयते । उक्तो यलोपाभावः ॥

वावभ्र्ति । भकाररेफतकारास्संयुज्यन्ते । 'अनचि च' इति भकारस्य पक्षे द्विर्वचने, 'झलां जश् झशि' इति पूर्वस्य जश्त्वेन बकारभकाररेफतकाराः द्रष्टव्याः ॥

लङि—तिप्सिपोः हल्ङ्यादिलोपे संयोगान्तलोपे च 'झलां जशोऽन्ते' इति जश्त्वे च 'वावसाने' इति चर्त्वे अवावब् । अवावप् ॥

एवं मभ्रति । इत्यादि ॥

चरति । चचार । चेरतुः । चेरुः । चरिता । इत्यादि । अचारीत्—'अतो ल्रान्तस्य' इति वृद्धिः ॥

चिचरिषति ॥

चञ्चार्यते—'लुपसदचर' इति भावगर्हायामेव यङ् । 'चरफलोश्च' इत्यभ्यासस्य नुकि 'उत्परस्यातः' इत्युत्वे तस्य हलपररेफत्वे 'हलि च' इति दीर्घः । चञ्चुरीति चञ्चर्ति । अत्र दीर्घस्य पूर्वत्रासिद्धत्वेन प्राप्तो लघूपधगुणः उदिति तपरकरणसामर्थ्यान्न भवति तपरत्वं हि विकारान्तरनिवृत्त्यर्थम् । यद्येवं दीर्घोपि निवर्तेत इति न मन्तव्यम् । यतस्तपरत्वेन निवृत्तौ प्रसक्तायामपि दीर्घत्वमसिद्धम् ॥

अचञ्चूः—लङि तिप्सिपोः हल्ङ्यादिलोपे रेफस्य विसर्जनीयः ॥

यदाऽयमुत्पूर्वः सकर्मकस्तदा—'उदश्चरस्सकर्मकात्' इति तङ् गुरुवचनमुच्चरते इति । उत्क्रम्य गच्छतीत्यर्थः ॥

तथा—समुपसृष्टात् 'समस्तृतीयायुक्तात्' इति तङ् अश्वेन सञ्चरते इति । सम इतीयं षष्ठी । तेन व्यवहितेऽपि भवति अश्वेन समुदाचरते इति ॥

चर्यम्—'गदमदचर' इति भावकर्मणोः यत् । 'अनुपसर्गे' इति वचनात्सोपसर्गे—उपचार्यम् . इति ण्यदेव ॥

आचर्यो देशः—'चरेराङि चागुरौ' इति यत् । गुरौ तु आचार्यः इति ण्यदेव ॥

आचार्यस्य स्त्री आचार्यानी—'इन्द्रवरुण' इत्यादिना ङीषनुकौ । 'आचार्यादणत्वं च' इति णत्वाभावः ॥

चरतीति चरः—चरडिति पचादिपाठादच् टित् ॥

स्त्रियां चरी ॥

चरस्य गोत्रापत्यं चारायणः । 'नडादिभ्यः फक्' इति षष्ठ्यन्ताद्गोत्रापत्ये फक्, फस्यायनादेशः ॥

चराचरः—'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य' इति अचि पक्षे द्विर्वचनम्, अभ्यासस्यागागमः । आक आगमत्व-सामर्थ्यान्न हलादिशेषः, अन्यथा आदेशमेव कुर्यात् । दीर्घोच्चा-रणसामर्थ्यान्न ह्रस्वः ॥

कल्याणाचारः । कल्याणाचारा । 'शीलिकामि' इत्या-दिना कर्मण्युपपदे णः ॥

कुरुषु चरतीति कुरुचरः—'चरेष्ट' इत्यधिकरणे उपपदे टप्रत्ययः । टित्त्वात् स्त्रियां कुरुचरी । भिक्षाचरः—'भिक्षा-सेनादायेषु च' इति भिक्षादिषूपपदेषु टप्रत्ययः । एवं सेना-चरः आदायचरः इति । अनधिकरणार्थमिदं सूत्रम् ॥

चरिष्णुः—'अलङ्कृञ्' इत्यादिना इष्णुच् ॥

अतिचारी । उपचारी—सम्पृचादिना ताच्छीलिको घिनुण् ॥

ब्रह्म वेदः तदर्थं व्रतं चरतीति ब्रह्मचारी—'सुप्यजातौ' इति णिनिः ॥

समानो ब्रह्मचारी' सब्रह्मचारी—'चरणे ब्रह्मचारिणि' इति चरणे गम्यमाने समानस्य सभावः । चरणशब्दः शाखाध्यायिषु रूढः ॥

सब्रह्मचारिण इमे साब्रह्मचाराः—'नान्तस्य टिलोपे सब्रह्म-

चारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसङ्ख्यानम् ' इति टिलोपः ।

चर्यते अनेनेति चरित्रम् – 'अर्तिलूधूसूखनसहचर इत्रः ' इति इत्रः करणे । प्रज्ञादिपाठात्स्वार्थेऽणि चारित्रम् ॥

गोचरो विषयः सञ्चरो मार्गः—' गोचरसञ्चर ' इत्यधिकरणे करणे च घप्रत्ययान्तौ निपात्येते । अत्र सञ्चरत्यनेनेति सञ्चरः इति वृत्तिः । तत्र सुधाकरः—' समस्तृतीयायुक्तात् ' इति तङ् भाव्यम् , इति ॥

परिचर्या—' परिचर्यापरिसर्या ' इत्यादिना स्त्रिया भावे शे यक् ॥

चरितं तदिति चर्म—' मन् इति मन् । अयं च. ' उणादयो बहुलम् ' ' भूतेऽपि दृश्यन्ते ' इति भूते ॥

चर्माण्यस्यां सन्तीति चर्मण्वती नदी । ' आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ' इति मतुपि नलोपाभावो णत्वं च संज्ञायां निपात्यते ॥

चर्मी—' व्रीह्यादिभ्यश्च ' इति मत्वर्थ इनिः । ' नस्तद्धिते ' इति टिलोपः ॥

चर्मिणोऽपत्यं चार्मिकायणिः—' वाकिनादीनां कुक्च ' इति फिञ्, कुक्चागमः । कुकि नान्तत्वाभावेऽपि ' चर्मवर्मिणोर्नलोपश्च ' इति वचनान्नलोपः ॥

सर्वः चर्मणा कृतः सर्वचर्मीणः, सार्वचर्मीणः—' सर्वचर्मणः कृतः खखञौ ' इति कृत इत्यर्थे तृतीयान्तात् अस्मात् खखञौ । सर्वचर्मण इत्यसमर्थः समासः । यतः सर्वशब्दस्य कृत इत्यनेन सम्बन्धो वृत्त्यादौ उक्तः ॥

चर्मणः कोशः चार्मः—‘चर्मणः कोश उपसङ्ख्यानम्’ इति टिलोपः। अन्यत्र—‘अन्’ इति प्रकृतिभावात् चार्मणं चक्षुः॥

चारु—‘दृसनिजनिचरि’ इत्युण् प्रत्ययः॥

चरुः—‘भृमृशीतृचरि’ इत्युप्रत्ययः। अयं भीमादित्वादपादाने, चरन्त्यस्मादादायेति हि व्युत्पत्तिः॥

चरकः—क्वुन्॥

चरकेण प्रोक्तमपि चरकम्—‘तेन प्रोक्तम्’ इत्यणः ‘कठचरकाल्लुक्’ इति लुक्। चरको नाम वैशम्पायनः। उक्तं च—‘कलापिवैशम्पायनान्तेवासिभ्यश्च’ इत्यत्र ‘आलम्बिश्चरकः प्राचां पलिङ्गकमलावुभौ’ इत्युपादाय चरको नाम वैशम्पायन इति। तत्र अभेदविवक्षया आलम्ब्यादीनामिदं विशेषणम्॥

चरकाय हितं चारकीणम्—‘माणवचरकाभ्यां खञ्’ इति ‘तस्मै हितम्’ इति विषये खञ्॥

चर सञ्चरने, इति चुरादौ॥

**ष्ठिवु निरसने॥ ५५१॥**

‘सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः’ इति प्रतिषेधः सत्वस्य॥

अत्र द्वितीयस्थकारष्ठकारो वेति वृत्तिः। आचार्येण शिष्येभ्य उभयथा प्रतिपादनात् उभयमपि प्रमाणमिति व्याख्यातारः॥

ष्ठीवति—‘ष्ठिवुक्लमुचमां शिति’ इति दीर्घः॥

तिष्ठेव, तिष्ठिवतुः—अभ्यासे खयः शेषः॥

ष्ठेविता । ष्ठेविष्यति । ष्ठीवतु । आशिषि—ष्ठीव्यात्, 'हलि च' इति दीर्घः । अष्ठेवीत् ॥

तिष्ठेविषति, तुष्ठ्यूषति—'सनीवन्तर्ध' इति सनः पक्षे इडागमः। तदा च 'हलन्ताच्च' इति सनः कित्वं वलि लोपं बाधित्वा 'छ्वोश्शूट्' इति ऊठि यणादेशे द्विर्वचनम् । अत्र वर्णमात्राश्रयत्वेन च अन्तरङ्गे यणि कर्तव्ये बाह्यप्रकृतिप्रत्ययत्वाश्रयत्वेन बहिरङ्गस्य ऊठोऽसिद्धत्वं न भवति, 'नाजानन्तर्ये' इति निषेधात् ॥

तेष्ठीव्यते । ष्ठेवयति । अतीष्ठिवत् ॥

ऊङ्भाविनां वकारान्तानां यङ्लुड नास्तीति तेवतावुक्तम् ॥

ठकारपक्षे सर्वत्राभ्यासे टकार उदाहार्यः । टिष्ठेव । इत्यादि ॥

ष्ठेवित्वा, ष्ठ्यूत्वा—उदित्त्वादिड्विकल्प इति । 'न क्त्वा सेट्' इति कित्त्वनिषेधात् गुणः । अन्यदा तु कित्त्वादूठि यणादेशः ॥

ष्ठ्यूतः । ष्ठ्यूतिः—'यस्य विभाषा' 'तितुत्र' इत्यनिट्त्वम् ॥

ष्ठीवनम् । ष्ठेवनम्—पृषोदरादित्वात्पक्षे दीर्घः । तथा च चान्द्रसूत्रम्—'ष्ठिवुक्लिवोर्दीर्घश्च' इति ॥

अयं दिवादावपि ॥

**जि जये ॥ ५५२ ॥**

अत्र मैत्रेय उत्तरधातुसादृश्यानुरोधेन अजन्तोऽपि धातुरयमत्र निर्दिश्यत इति । इह जय उत्कर्षप्राप्तिरित्यकर्मकोऽयम् । यस्त्व-ग्रेऽभिभवार्थस्स सकर्मकः । यदाह देवः—

जयिर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः ।
उत्कर्षप्राप्तिगद्योऽर्थो द्वितीयार्थे सकर्मकः ।। इति ।।

जयति । जिगाय । जिग्यतुः । जिग्युः । जिगयिथ, जिगेथ । जिग्यिव । 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य कुत्वं गकारः । अजन्तत्वादनिट्त्वे क्रादिनियमादिट् । थलि तु भारद्वाजनियमादिड्विकल्पः । अजादौ क्ङिति लिटि 'एरनेकाचः' इति यण् ।।

जेता । जेष्यति । जयतु । अजयत् । जयेत् ।।

जीयात्—'अकृत्सार्वधातुकयोः' इति दीर्घः ।।

अजैषीत् ।।

जिगीषति—'इको झल्' इति सनः कित्त्वान्न गुणः । 'अज्झनगमां सनि' अजन्तानां हन्तेर्गमेश्च झलादौ सनि दीर्घ इति दीर्घः, पूर्ववदभ्यासात्परस्य 'सन्लिटोः' इति कुत्वम् ।।

जेजीयते । जेजयीति, जेजेति । जेजितः । जेज्यति—अजादौ क्ङिति यण् ।।

जापयति—'क्रीङ् जीनां णौ' इत्यचस्स्थाने आत्त्वे पुगागमः अजीजपत् ।।

विजयते, पराजयते—'विपराभ्यां जेः' इति तङ् । अयं प्रकृतिग्रहणन्यायेन यङ्लुगन्तादपि इति विजेजिते, पराजेजिते इति ।।

यङ्लुगन्तात्सनि 'सन्लिटोर्जेः' इति कुत्वं तु न भवति, तत्र प्रत्यासत्त्या सन्लिण्निमित्तस्यैवाभ्यासस्य ग्रहणात् । तथा च वृत्तिः—सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यास इति ।।

विपराभ्यामित्यत्रोपसर्गयोर्ग्रहणात् पराजयति सेनेत्यादौ तङ्न-भवति ॥

अस्याकर्मकात्सर्वे कृतो न सन्तीति तन्त्रेणाभिभवार्थे प्रदर्शयिष्यन्ते ॥

जीव प्राणधारणे ॥ ५५३ ॥

प्राणलक्षणस्य कर्मणो धात्वर्थेनोपसङ्ग्रहादकर्मकोऽयम् ॥

जीवति । जिजीव । जीविता । इत्यादि ॥

जिजीविषति । जेजीव्यते ॥

वकारान्तानामूङ्भाविनां यङ्लुक् नास्तीति तेवतावुक्तम् ॥

जीवयति, अजिजीवत्, अजीजिवत्, 'भ्राजभास' इत्यादिना णौ चङ्युपधाह्रस्वविकल्पः ॥

यावज्जीवम् — 'यावति विन्दजीवोः' इति यावत्युपपदे णमुल् ॥

जीविका— 'धात्वर्थनिर्देशे ण्वुल्वक्तव्यः' इति ण्वुल् ॥

जीवनस्य मूतो जीमूतः पृषोदरादिपाठाज्जीभावः । उणादौ तु 'जेर्मुट्चोदात्तः' इति जयतौ व्युत्पादितः ॥

जीवातुः— 'जीवेरातुः' इत्यातुप्रत्ययः ॥

जैवातृकः— 'जीवेरातृकन् वृद्धिश्च' इत्यातृकनि वृद्धिः ॥

जीवन्तः— 'रुहिनदिजीविप्राणिभ्यो झच् षिद्वदाशिषि' इति झच् । षिद्वद्भावात् स्त्रीयां ङीषि—जीवन्ती ॥

जीवन्तस्य गोत्रमपत्यं वा जैवन्तायनः— 'द्रोणपर्वतजीवन्तादन्यतरस्याम्' इति गोत्रापत्ये वा फक् । तदभावे इञि जैवन्तिः ॥

**पीव मीव तीव णीव स्थौल्ये ॥ ५५४-५५७ ॥**

पीवति । पिपीव । पीविता ॥

पिपीविषति । पेपीव्यते ॥

पीवयति । अपीपिवत् ॥

एवं मीवति । तीवति । इत्यादि ।

प्रणीवति—'उपसर्गादसमासेऽपि' इति णत्वम् ॥

पीवरः—स्थूलः । मीवरः—मानी । तीवरो निषादः । नीवरो वणिक् । 'छित्वरछत्वर' इत्यादिना ष्वरचि वलि लोपे निपात्यन्ते । टित्त्वात् स्त्रियां ङीपि पीवरी इत्यादि ॥

उणादिवृत्तौ तु पा पाने । तेवृ देवने । मङ्‌ माने । णीञ् प्रापणे । इत्येतेभ्य एते व्युत्पादिताः ॥

**क्षीवु निरसने ॥ ५५८ ॥**

क्षीवतीत्यादि ॥

उदित्त्वात् क्त्वायामिड्विकल्प—क्षीवित्वा । क्ष्यूत्वा । इडभावे ऊठि यणादेशः ॥

निष्ठायां 'यस्य विभाषा' इतीण्निषेधात् क्ष्यूतः ॥

क्षेवु निरसने इति चन्द्रः । क्षेवति । इत्यादि ॥

**उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः ॥ ५५९-५६३ ॥**

ऊर्वति । ऊर्वाञ्चकार । ऊर्विता । ऊर्विष्यति । ऊर्वतु । और्वत् । ऊर्वेत् । आशिषि—ऊर्व्यात् । और्वीत् ।। ऊर्विविषति । ऊर्वयति । माभवानूर्विवत् । रेफोपधत्वात् 'उपधायां च' इति सर्वत्र दीर्घः ।।

ऊर्णः, ऊर्णवान् । ईदित्वान्निष्ठायामनिट्त्वे झलादिप्रत्ययपरत्वात् 'राल्लोपः' इति वलोपे रेफस्य हल्परत्वात् 'हलि च' इति दीर्घः । 'रषाभ्याम्' इति निष्ठानस्य णत्वम् ।।

एवं क्विप्यपि 'राल्लोप' इति वलोपे 'र्वोरुपधायाः' इति पदत्वे दीर्घः—ऊः उरौ उरः । इत्यादि ।।

तूर्वति । तुतूर्व । तूर्विता । इत्यादि ।।

तुतूर्विषति ।।

तोतूर्यते—'हलो यमाम्' इति वकारस्य लोपो यथासङ्ख्यान्न भवति ।।

तोतूर्वीति, तोतोर्ति । तोतूर्तः । तोतूर्वति । इत्यादि । पिद्वचनेष्वनिट्पक्षे वकारस्य झल्परत्वेन अनुनासिकादिप्रत्ययपरत्वेन च राल्लोपे लघूपधगुणः । 'हलि च' इति दीर्घत्वं तु गुणे पूर्वत्रासिद्धम् । ङित्सु अनेनैव दीर्घः ।।

तोतूर्वति इत्यत्र परत्वान्नित्यत्वाच्च राल्लोपात्पूर्वं अद्भावे झल्परत्वाभावान्न राल्लोपः । 'उपधायां च' इति रेफोपधत्वाद्दीर्घः ।।

तोतूर्तः इत्यत्र वलिलोपे 'हलि च' इति दीर्घः । अझलादित्वादनुनासिकत्वाच्च राल्लोपस्य न प्रसङ्गः ।।

तोतोर्तु तोतूर्तात् । तोतूर्हि । तातूर्वाणि । उत्तमे राल्लोपान्नित्यत्वादाडागमः ।।

लङि तिप्सिपोः परत्वात् राल्लोपे, हल्ङ्यादिलोपे अतोतो इति अतोतूर्युः इत्यत्र नित्यत्वाज्जुसि झल्परत्वाभावान्न राल्लोपः ।।

तूर्वयति । अतुतूर्वत् ।।

तूर्वित्वा । तूर्णः तूर्णवान्—ईदित्त्वान्निष्ठायामनिट्त्वम् ।।

एवं थूर्वति । दूर्वति । धूर्वति । इत्यादि ।।

धूः, धुरौ—'भ्रजभास' इत्यादिना क्विपि राल्लोपः । पदत्वे 'र्वोः' इति दीर्घः । धूर्षु, इत्यत्र 'खरवसानयोः' इति विसर्जनीयो 'रोस्सुपि' रोरेव सुपीति नियमान्न भवति ।।

धूर्पतिः—'अहरादीनां पत्यादिषूपसङ्ख्यानम्' इति विसर्जनीयापवादः पक्षे रेफः । उभयत्राप्यादिशब्दः प्रकार इति हरदत्तः ।।

रेफाभावे विसर्जनीयः—धूःपतिः । अत्र विसर्जनीयस्य 'कुप्वोः ≍क≍पौ च' इति पवर्गपरत्वेन पक्षे उपध्मानीय उदाहार्यः । 'इणष्षः' इति षत्वमपदादिकवर्गपवर्गपरविसर्जनीयविषयमितीह न भवति ।।

धुर्यः, धौरेयः—'धुरो यड्ढकौ' इति द्वितीयान्ताद्वहतीत्यर्थे यड्ढकौ ।।

धुर्यम्—इत्यत्र यति 'हलि च' इति दीर्घस्य 'न भकुर्छुराम्' इति प्रतिषेधः । 'र्वोः' इति दीर्घस्तु 'यचि भम्' इति भत्वेन पदत्वस्य बाधान्न भवति ।।

सर्वधुरां वहति सर्वधुरीणः—'खः सर्वधुरात्' इति खः । खः इति योगविभागात् दक्षिणधुरीणः । उत्तरधुरीण इति वृत्तिः । योगविभागस्येष्टसिद्ध्यर्थत्वात् धुरीणः इत्यपि द्रष्टव्यम् ।

अत्र 'ऋक्पूरब्धूः पथामानक्षे' इति ऋगाद्यन्ते समासे आकारस्य समासान्तस्य विधानात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति परवल्लिङ्गतया सर्वधुराया इति निर्देष्टव्ये 'सर्वधुरात्' इति निर्देशः शब्दरूपापेक्ष इति वृत्तावुक्तम्। अनक्ष इति वचनान अक्षस्य धूरक्षधूः दृढा धूरस्य दृढधूः अक्षः इत्यादावकारो न भवति। सुधूः। अतिधूः। किंधूः। अधूः। इत्यत्र, 'न पूजनात्' 'किमः क्षेपे' 'नञस्तत्पुरुषात्' इति समासान्ताभावः। पूजायां च स्वती परिगणितौ। 'किमः क्षेपे' इत्यत्र न्यासान्तरेणापि क्षेपग्रहणं लक्षणप्रतिपदोक्तपरिभाषया 'किं क्षेपे' इति विहितस्य क्षेपविषयस्यैव तत्पुरुषस्य लाभे तत्करणात्सा परिभाषा नेहास्तीति ज्ञापनात् कुत्सिता धूरस्य किंधूः शकट इत्यत्रापि समासान्तो नेत्युक्तं पदमञ्जर्याम्। तद्भाष्यविरोधादुपेक्ष्यमिति। अयं च अकारः समासार्थादुत्तरपदादकृत एव समासे भवति। तेन द्विधुरीत्यादावकारान्तोत्तरपदत्वात् 'द्विगोः' इति ङीप्सिद्धिः। एतच्च जम्भतावुपपादितम्॥

एकधुरां वहति एकधुरीणः, एकधुरः—एकधुराल्लुक्च' इति खस्य पक्षे लुक्॥

धूर्तः—'हसिमृग्रिण्वामि' इत्यादिना तन्॥

अक्षेषु धूर्तः अक्षधूर्तः—'सप्तमी शौण्डैः' इति सप्तम्यन्तं शौण्डादिना समस्यते॥

ब्राह्मणधूर्तः—'पोटायुवति' इत्यादिना समासः॥

**गुर्वी उद्यमने॥ ५६४॥**

**मुर्वी बन्धने॥ ५६५॥**

गूर्वति । मूर्वतीत्यादि ॥

मूर्वा—' गुरोश्च ' इत्यकारप्रत्ययः ॥

मौर्वी—' तस्य विकारः ' इत्यणि ङीप् ॥

पुर्व पर्व फर्व मर्व पूरणे ॥ ५६६-५६९ ॥

पूर्वति—' उपधायां च ' इति दीर्घः

क्विपि राल्लोपे पूः । पिपर्तौ च व्युत्पादयिष्यते ॥

पुरि भवादि पौरेयम्—' नद्यादिभ्यो ढक् ' इति शैषिको ढक् । तत्र वृत्तौ—पूर्वनगरीति पठित्वा केचित्पूर्वनगिरीति पठन्ति । विच्छिद्य च प्रत्ययं कुर्वन्ति । उभयमपि प्रमाण-मित्युक्तम् ॥

द्विपुरी—' ऋक्पूरब्धूः ' इत्यकारः समासान्त । स चाकृत एव समास इति जम्भतावुक्तम् । तेन अकारान्तोत्तरपदद्विगुत्वे ङीप् पूर्ववदत्रापि स्वतिकिंनञ्भ्यः परत्वे समासान्तो न भवति ॥

पूर्वः—अच् । ' सर्वादीनि सर्वनामानि ' असंज्ञोपसर्जनानि सर्वादीनि सर्वनामसंज्ञानीति सर्वनामत्वे ' सर्वनाम्नः स्मै ' इति ङेः स्मैभावः—पूर्वस्मै ॥

' पूर्वादिभ्यो नवभ्यो वा ' इति पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । इति ङसिङ्योः स्मात्स्मिनौ ॥

' आमि सर्वनाम्नः सुट् ' इति पूर्वेषामित्यामः सुडागमः । ' बहुवचने झल्येत् ' इत्येत्वे षत्वम् ॥

जसि च ' पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ' इति जसः कार्यं प्रति सर्वनामसंज्ञाविकल्पनात् सर्वनामत्वे

'जसश्शी' इति शीभावे—पूर्वे । अन्यदा पूर्वाः । जसः कार्यं प्रतीत्युक्तत्वात्, 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति अकचि संज्ञायां विकल्पाभावात् पूर्वके । पूर्वका इति भवति । व्यवस्था नाम स्वाभिधेयापेक्षोऽवधिनियमः ॥

मासेन पूर्वाय मासपूर्वाय इत्यत्र 'पूर्वसदृश' इति तृतीयासमासे 'तृतीयासमासे' इति सर्वनामत्वाभावः । अत्र समास इति प्रकृतेऽपि पुनस्समासवचनात् वाक्येऽपि नेयं संज्ञा ॥

स्त्रियां तु 'सर्वनाम्नस्स्याड्ढ्रस्वश्च' इति ङिद्वचनेषु स्याडागमे ह्रस्वत्वे—पूर्वस्यै । पूर्वस्याः । पूर्वस्याम् इति । शीभावादि अनदन्तत्वान्न भवति ॥

पूर्वस्मिन्नहनि पूर्वेद्युः—'सद्यःपरुत्परार्यैषमः पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः' इत्येद्युस्प्रत्यये 'यस्य' इति लोपे निपात्यते । 'तद्धितश्चासर्वविभक्तिः' इति अव्ययत्वम् ॥

पुरो वसति । पुर आगतः । पुरो रमणीयम्—'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इति सप्तमीपञ्चमीप्रथमान्तेभ्यः पूर्वादिभ्योऽसिप्रत्ययः स्वार्थे, तत्सन्नियोगेनैषां यथासङ्ख्यं पुरादय आदेशाः इत्यसिप्रत्यये पूर्वस्य पुरादेशः ॥

पुरस्ताद्वसति । पुरस्तादागतः । पुरस्ताद्रमणीयम्—'अस्ताति च' अस्तातौ परतः पूर्वादीनां पूर्ववत् पुराद्यादेशाः ॥

पूर्वतः, पूर्वत्र—'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' इत्यधिकृत्य 'पञ्चम्यास्तसिल्' 'सप्तम्यास्त्रल्' इति स्वार्थे तसिल्त्रलौ ॥

पुरो भवं पौरस्त्यम् । 'दक्षिणापश्चात्पुरसस्त्यक्' इति शैषिकस्त्यक ॥

पुरस्कृत्य—'पुरोऽव्ययम्' इति क्रियायोगे गतित्वात् 'कुगति' इति समासे क्त्वो ल्यपि तुक्। 'नमस्पुरसोर्गत्योः' इति कुप्वोः परतः विसर्जनीयस्य सत्वम्। गतिसंज्ञायामव्ययवचनात् पुरःकृत्वा इत्यत्र अनव्ययत्वेन गतित्वाभावात् सत्वसमासयोरभावः ॥

पूर्वं कृतमनेन पूर्वी—'पूर्वादिनिः' इति प्रथमान्तात् पूर्वशब्दात् अनेन इत्यर्थे इनिः। पूर्वं कृतमनेन इति 'सुप्सुपा' इति समासः ॥

कृतपूर्वी कटम्—'सपूर्वाच्च' इतीनिः। सपूर्वाद्विद्यमानपूर्वादित्यर्थः ॥

पूर्वः पुरुषः पूर्वपुरुषः—'पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च' इति समानाधिकरणविशेषणसमासः ॥

पूर्वं कायस्य पूर्वकायः—'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' इत्येकदेशिना अवयविना षष्ठ्यन्तेन पूर्वादीनि सामर्थ्यादवयववचनानि समस्यन्ते इति तत्पुरुषः। 'एकाधिकरणे' इत्युक्तत्वात् अवयविन्येकद्रव्ये सत्ययं समासः। तेन पूर्वः छात्राणामित्यत्र समासो न भवति ॥

पूर्वापरम्। पूर्वापरौ—'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' इति द्वन्द्वस्य विभाषयैकवद्भावः। 'स नपुंसकं' इति विहितैकवद्भावः नपुंसकलिङ्गः ॥

पूर्वपूर्वं पुष्यन्ति पूर्वनरं पुष्यतीत्यर्थः। पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवतः' इति द्वित्वम् ॥

पर्वति। पपर्व। पर्विता ॥

पिपर्विषति । पापर्व्यते । पापर्ति । लङि तिप्सिपोः—अपापः ॥

क्विपि राल्लोपे—पः परौ परः ॥

पर्वतः—'भृमृदृशियजिपर्वि' इति अतच् ॥

पर्वते भवो मनुष्यः पर्वतीयः—'पर्वताच्च' इति शैषिकः छः । भवादावमनुष्ये 'विभाषाऽमनुष्ये' इत्यणि पार्वतम् इत्यपि भवति । 'तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूत्' इति प्रयोगः 'तस्येदम्' इत्यणि द्रष्टव्यः ॥

पर्वतोऽभिजनोऽस्याः पार्वती—'सिन्धुतक्षशिलादिभ्योऽणञौ' इति प्रथमान्तात् अभिजनोपाधिकात् अस्येत्यर्थे तक्षशिलादित्वादञि ङीप् । यत्र पूर्वैरुषितं सोऽभिजनः ॥

एवं फर्वति मर्वतीत्यादि ॥

पूर्व निकेतने ॥ इति चुरादौ ॥

अत्र देवः—पूर्व्यतीति तु यत् स्वप्ने तत्कण्ड्वादिषु दर्शनादित्याह । गणपाठे पुनः पूर्वशब्दो न दृश्यते । यस्त्वर्थनिर्देश—सहिते गणे पठ्यते 'लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च' इति सोऽनयोरर्थनिर्देशार्थः । अत एव शाकटायनामोघायां वृत्तौ अर्थनिर्देशमन्तरेण कण्ड्वादीनां पाठे पूर्वशब्दो न पठ्यते । स्पष्टं चैतत्पुरुषकारे ॥

**चर्व अदने ॥ ५७० ॥**

चर्वतीत्यादि ॥

चर्वयति देवदत्तम्—'निगरणचलन' इति नित्यं परस्मैपदम् । 'गतिबुद्धि' इति प्रयोज्यस्य कर्मत्वम् ॥

भर्व हिंसायाम् ॥ ५७९ ॥

भर्वतीत्यादि ॥

अयमीदित्स्वपि क्वचित्पठ्यते ॥

कर्व खर्व गर्व दर्पे ॥ ५७२–५७४ ॥

कर्वति । खर्वति । गर्वतीत्यादि ॥

कर्वी इतीदित्स्वपि पठ्यते ॥

अर्व शर्व षर्व हिंसायाम् ॥ ५७५–५७७ ॥

अर्वति । आनर्व । अर्विता । अर्विविषति ॥

शर्वति । शर्वः । शृणातेरौणादिके वप्रत्ययेऽपि । शर्वस्य स्त्री शर्वाणी—'इन्द्रवरुण' इत्यादिना ङीषनुकौ ॥

सर्वति ॥

सिसर्विषतीत्यत्र 'स्तौतिण्योरेव' इत्यषत्वम् । षोपदेशफलं ण्यन्तात्सनि—सिषर्वयिषतीति ॥

सर्वः । सर्तेर्व प्रत्यये* वा । सर्वनामकार्यं पूर्वशब्दवत् ॥

सर्वस्मिन्काले सर्वदा—'सर्वैकान्यकिंयत्तदः काले दा' इति काले वर्तमानात्स्वार्थे दाप्रत्ययः ॥

सदा—'सर्वस्य सोऽन्यतरस्याम्' इति पक्षे दाकारे प्रत्यये सभावः ॥

सर्वस्मै हितं सार्वम्, सर्वीयम्—'सर्वपुरुषाभ्यां णढञौ' इत्यत्र 'सर्वाण्णस्य वा वचनम्' इत्युक्तत्वाच्चतुर्थ्यन्तात् हितमित्यर्थे छाणौ ॥

---

* सर्तेर्वन् ।

सर्वे देवाः सर्वदेवाः 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति कर्मधारयः ॥

सर्वेषां शुक्लतरः सर्वशुक्लः—'गुणात्तरेण समासस्तरलोपश्च' इति षष्ठ्यन्तस्य तरवन्तेन गुणवचनेन समासः तरलोपश्च ॥

इवि व्याप्तौ ॥ ५७८ ॥

इन्वति । इदित्त्वान्नुम् । नुम्विधावुपदेशिवद्वचनादिजादिगुरुमत्त्वात् इन्वाञ्चकार ॥

इन्विता । इन्विष्यति । इन्वतु । ऐन्वत् । इन्वेत् । इन्व्यात् । ऐन्वीत् ॥

इन्विविषति । इन्वयति । ऐन्विवत्

इन्वितः

इन्वका—तारकाविशेषः । संज्ञायां कुन् । क्षिपकादित्वात् प्रत्ययस्थादितीत्त्वाभावः ॥

पिवि मिवि णिवि सेचने ॥ ५७९-५८१ ॥

अयं पाठो मैत्रेयस्य । अन्ये तृतीयं मूर्धन्योष्मादिं पठन्ति । सेवने इति तरङ्गिण्याम् । पिन्वति । पिपिन्व । पिन्विता ॥

पिपिन्विषति । पेपिन्व्यते ॥

पिन्वयति । अपिपिन्वत् ॥

एवं मिन्वति । निन्वतीत्यादि ॥

हिवि दिवि धिवि जिवि प्रीणनार्थाः ॥ ५८२-५८५ ॥

अत्र केचिदाद्यमिकारादिं पठित्वा पुनःपाठोऽर्थभेदादिति । धातूनामनेकार्थत्वे तु न प्रयोजनमस्ति । तस्मान्मैत्रेयोक्त एव हिवीति पाठो ज्यायान् ॥

हिन्वति । जिहिन्व । हिन्वितेत्यादि पिन्वतिवत् ॥

एवं दिन्वतीत्यादि ॥

धिनोतेः 'धिन्विकृण्व्योर च' इति शब्विषये उप्रत्ययः अकारश्चान्तादेशः । तस्यातो लोपः । तस्य स्थानिवत्त्वादुप्रत्ययमपेक्ष्य लघूपधगुणो न भवति तस्य तु पित्सु गुणः । धिनोति । धिनुतः । धिन्वन्ति—अन्तादेशे यणादेशः । धिनोषि ॥

धिनुवः, धिन्वः । धिनुमः, धिन्मः—'लोपश्चास्यान्यतरस्यां म्वोः' असंयोगपूर्वो य उकारस्तदन्तस्य प्रत्ययस्य वकारमकारादौ प्रत्यये वा लोप इति पक्षे उलोपः । मिपि तु परत्वाद्गुणे उकारस्याभावः ॥

धिनोतु । धिनु—'उतश्च प्रत्ययादसंयोगपूर्वात्' योऽयमुकारोऽसंयोगपूर्वः तदन्तात्प्रत्ययात्परस्य हेर्लुगिति लुक् । धिनवानि । धिनवाव । धिनवाम—नित्यत्वादुकारलोपात्पूर्वमाट् ॥

अधिनोत् । अधिनुताम् । अधिनोः । अधिनवम् । अधिन्व । अधिनुव । अधिन्म । अधिनुम । धिनुयात् । अन्यत्र लकारे पूर्ववत् ॥

जिन्वति । इत्यादि देवने गतम् ॥

**रिवि रवि धवि गत्यर्थाः ॥ ५८६-५८८ ॥**

रिण्वति । रण्वति । धन्वतीत्यादि ॥

धन्वा—'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन्। उणादिवृत्तौ धन्विः सौत्रो धातुरित्युच्यते। नान्तत्वादसंबुद्धौ सर्वनामस्थाने दीर्घः। भसंज्ञायां 'न संयोगाद्वमन्तात्' इति अल्लोपनिषेधात् धन्वन इत्यादि॥

स्त्रियाम्—'अनो बहुव्रीहेः' इति ङीपो निषेधात् सुधन्वा, सुधन्वानौ इत्यादि।

यदा तु 'डाबुभाभ्यामन्यतरस्याम्' इति डाप् तदा सुधन्वा। सुधन्वे। सुधन्वाः इत्यादि। अत्रान्यतरस्यां ग्रहणात् यत् डापोऽभ्यनुज्ञानमुक्तं तदुपधालोपिन एवेति जम्भतावुक्तम्॥

**कृपि हिंसाकरणयोश्च॥ ५८९॥**

चकाराद्गतौ॥

कृणोति—'धिन्विकृण्व्योर च' इति शब्विषये उकारप्रत्ययोऽकारश्चान्तादेशः। अल्लोपादि सर्वं धिन्विवत्॥

अयं स्वादौ च॥

**मव बन्धने॥ ५९०॥**

मवति। ममाव, मेवतुः। मविता। अमवीत्, अमावीत्। 'अतो हलादेः' इति वा वृद्धिः॥

सिमविषति। मामव्यते। मामवीति, मामोति। मामूतः। मामवति। मामोषि। मामंमि। मामावः। मामूमः—'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' ज्वरादीनामुपधावकारयोः क्वौ झलादावनुनासिकादौ च प्रत्यये परे ऊडित्यूडादेशो पिति गुणः॥

मामति इत्यत्र परत्वान्नित्यत्वात् अद्भावे, झलादित्वं पर्यवसन्नमिति ऊठ् न भवति। मामाव इत्यत्र वलि लोपे 'अतो

दीर्घो यञि ' इति दीर्घः । ' ज्वरत्वर ' इत्यत्र क्वचित् वृत्तिकोशे क्वौ झलादौ क्ङितीति पठ्यते । तत्र क्ङिद्ग्रहणं संपातायातम् , अवतेस्तुनि ओतुः इति दर्शनात् । तथा अनुनासिकग्रहणं चावश्यमत्रानुवर्त्यम् ,* अवतेर्मनिन्प्रत्यये तस्य च टिलोपे ओम् इति दर्शनात् । तथा च ' न धातुलोप ' इत्यत्र कैयटे ' आस्रेमाणम् ' इत्युपादाय छान्दसत्वात् वकारस्य उण्न भवतीत्युक्तम् ।।

मामोतु, मामूतात् । मामौताम् । मामूहि । मामवानि—नित्यत्वादाटि झलादित्वं पर्यवसन्नमित्यूडभावः ।।

लङि तिप्सिपोरूठि—अमामोत् । अमामोः ।।

मिपि नित्यत्वादम्भावे—अमामवम् ।।

मावयति । अमीमवत् ।।

वकारान्तानामूड्भाविनां यङ्लुङ्नेति यदुक्तं तत् छ्वोरित्यूड्विषयं द्रष्टव्यम् । क्विपि—मूः मुवौ ।।

अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्य याचनक्रियेच्छादीप्त्यालिङ्गनहिंसादानभागवृद्धिषु ।। ५९१ ।।

अवति । आव । आवतुः । अविता । मा भवानवीत् । अविविषति । आवयति । मा भवानविवत् ।।

क्विपि ऊः । उवौ । उवः ' ज्वरत्वर ' इत्यादिना ऊठ् ।।

---

* ग्रहणं नावश्यमत्रानुवर्त्य ।

ऊतिः—'ऊतियूति' इत्यादिना क्तिनि निपात्यते। 'स्त्रियां क्तिन्' इति सिद्धे निपातनमुदात्तार्थम् ॥

अविषः—'अविमह्योष्टिषच्' इति टिषच्. टित्त्वात् स्त्रियां अविषी ॥

ऊनः—'इण्सिञ्जिदीङुष्यविभ्यो नक्' इति नकि ऊठि कित्त्वादगुणत्वम्'।

ओम्—'अवतेष्टिलोपश्च' इति मन्, तस्य च टिलोपे ऊठि गुणः ॥

ओतुः—'सितनि' इत्यादिना तुनि ऊठि गुणः। कृष्णोतुः—ओत्वोष्ठयोस्समासे वा' इति वा पररूपम्। अन्यदा तु 'वृद्धिरेचि' इति वृद्धिः ॥

अवि :—इन्निति इन् ॥

अविरेव अविकः—'अवेः कः' इति स्वार्थे कप्रत्ययः ॥

अवनिः—'अर्तिसृधृधम्यम्यश्यवितृजनिभ्योऽनिः' इत्यनिः ॥

अवनी—कृदिकारत्वात् ङीष् ।

अवीः—ऋतुमती—'अवितृस्तृतन्त्रिभ्य ईः' इति ईप्रत्ययः ॥

मव्यादय उदात्ता उदात्तेतो जयतिवर्जम् ॥

## धावु गतिशुद्धयोः ॥ ५९२ ॥

उदात्तः। स्वरितेत्। 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति क्रियाफलस्य प्रधानस्य कर्तृगामित्वविवक्षायां तङ् ॥

धावति। दधाव, दधावतुः। धावितेत्यादि ॥

तङ्पक्षे धावते इत्यादि ॥

यदा क्रियाफलस्य कर्तृगामित्वमुपपदेन प्रतीयते तदा—'विभाषोपपदेन प्रतीयमाने' इति परस्मैपदं भवति । स्वार्थं । धावतीति ।।

दिधाविषति. दिधाविषते—'पूर्ववत्सनः' इति क्रियाफलस्य कर्तृगामित्वे तङ् ।।

दाधाव्यते ।।

धावयति अदीधवत् ।।

धावित्वा, धौत्वा—'उदितो वा' इतीड्विकल्पः । इडभावे 'छ्वोश्शूट्' इत्यूठि 'एत्येधत्यूठ्सु' इति वृद्धिः ।।

निष्ठायां 'यस्य विभाषा' इत्यनिट्त्वात्—धौतवान् ।।

अत्र मैत्रेयः—'कथं धावितो धावितवान्' इति उपक्रम्य कृतिवृतिनृतीनामीदित्त्वं 'यस्य विभाषा' इत्यस्यानित्यत्वे ज्ञापकमाह । नित्यत्वे ह्येतेषाम्—'सेसिचिकृतचृतछृततृदनृतः' इति सकारादाविटो विकल्पनात् निष्ठायामनिट्त्वस्य सिद्धत्वात्किं तदर्थेनेदित्त्वेन ।।

## अथ ऊष्मान्ता आत्मनेपदिनः

### धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु ।। ५९३-५९४ ।।

धुक्षते । दुधुक्षे । धुक्षिता । धुक्षिष्यते । धुक्षताम् । अधुक्षत । धुक्षेत । धुक्षिषीष्ट । अधुक्षिष्ट ।। दुधुक्षिषते ।। दोधुक्ष्यते ।। दोधुक्षीति, दोधुष्टि । अनिटि 'स्कोः' इति कलोपः तस्यासिद्धत्वान्न लघूपधगुणः । दोधुक्षीषि दोधुक्षि अनीट्त्वे 'स्कोः' इति कलोपे 'षढोः कस्सि' इति कत्वे सिपः षत्वम् । दोधुष्टु ।

दोधुड्ढि —अत्र सेर्हिः । तस्य धित्वे ष्टुत्वे च षकारस्य 'झलां जश् झशि' इति दकारः । दोधुक्षाणि ॥

लङि—तिप्सिपोः हलङ्यादिलोपे पदान्तसंयोगत्वात् कलोपे—'झलां जशोऽन्ते' इति जश्त्वस्य 'वावसाने' इति चर्त्वे—अदोधुट्, अधोदुड् ॥

धुक्षयति । अदुधुक्षत् ॥

धुक्षा ॥

एवं धिक्षते इत्यादि ॥

**वृक्ष वरणे ॥ ५९५ ॥**

वृक्षते । ववृक्षे—द्विर्वचने उरदत्वे च हलादिशेषः ॥

वृक्षिता । इत्यादि ॥

विवृक्षिषते ॥

वरीवृक्ष्यते—'रीगृत्वतः' इति रीगागमः ॥

वर्वृष्टि । वरिवृष्टि । वरीवृष्टि । इत्यादि ॥

वृक्षयति । अववृक्षत् ॥

वृक्षः ॥

वृक्षाः ॥

**शिक्ष विद्योपादाने ॥ ५९६ ॥**

शिक्षते । शिशिक्ष । इत्यादि धुक्षिवत् ॥

अत्र तरङ्गिणीकारादयः—'शिक्षेर्जिज्ञासायाम्' इति वचनं नियमार्थमिति व्याचक्षाणा जिज्ञासाया अन्यत्र परस्मैपदमाहुः ।

तदयुक्तम्, शकेः सन्नन्तस्य विध्यर्थत्वसम्भवात्; न च विधिसम्भवे नियमो युज्यते। एवमेव समर्थितं न्यासकैयटपदमञ्जर्यादिषु ॥

भिक्ष याच्ञायां अलाभे लाभे च ॥ ५९७ ॥

भिक्षते इत्यादि पूर्ववत् ॥

अयं द्विकर्मकः। तत्र 'अप्रधाने दुहादीनां' इति वचनात् लकृत्यक्तखलर्था अप्रधाने भवन्ति। पौरवो गां भिक्ष्यते। भिक्षितव्यः। भिक्षितः। सुभिक्ष इत्यादि। षष्ठी तु द्वितीयावदुभयत्र भवति—भिक्षिता गोः पौरवस्य इति। अप्रधाने तु 'उभयथा गोणिकापुत्रः' इति भाष्ये उक्तत्वात् पौरवं इति द्वितीयाऽपि भवति ॥

भिक्षितव्यो राजा धनं देवदत्तेनेत्यत्र अनभिहिते कर्मणि कर्तरि च 'कर्तृकर्मणोः' इति षष्ठ्या 'उभयप्राप्तौ कृत्ये प्रतिषेधः' इत्युक्तत्वात् न प्रसङ्गः ॥

सर्वमेतन्नाथतावुपपादितम्। तत एवावगन्तव्यम् ॥

भिक्षुः—'सनाशंसभिक्ष उः' इति ताच्छीलिक उप्रत्ययः ॥

भिक्षाकः—जल्पभिक्षेति षाकन्। षित्त्वात्, स्त्रियां भिक्षाकी ॥

क्लेश अव्यक्तायां वाचि ॥ ५९८ ॥

बाधन इति दुर्गः। अत्र स्वामी—'क्लेश व्यक्तायां वाचि च' इति पठन्निमावपि पूर्वधातोरर्थविवाह। चन्द्रदुर्गमैत्रेयसम्मताकारदेवादयस्तु धात्वन्तरमेवाहुः ॥

क्लेशते। चिक्लेशे। क्लेशितेत्यादि ॥

चिक्लेशिषते । चेक्लिश्यते ॥ चेक्लेष्टि । इत्यादि ॥ ढौ तु चेक्लेड्ढि । व्रश्चत्यादिना षत्वे धेष्टुत्वे जश्त्वम् ॥

क्लेशयति । अचिक्लेशत् ॥

क्लेश उपताप इति दिवादौ ॥

दक्ष वृद्धौ शीघ्रार्थे च ॥ ५९९ ॥

दक्षते । ददक्षे । दक्षितेत्यादि ॥

दक्षिणः—'द्रुदक्षिभ्यामिनन्' इतीनन् । पूर्वशब्दवत् सर्वनामत्वम्, तत्कार्यं च । स्त्रियां तु टापि दक्षिणा ॥

दक्षिणामर्हतीत्यादि दक्षिणीयः । दक्षिण्यः । 'कडङ्करदक्षिणाच्छ च' इति द्वितीयान्तात् अर्हतीत्यर्थे छयतौ ॥

ग्रामस्य दक्षिणतो वसति । दक्षिणत आगतः । दक्षिणतो रमणीयम्—' दक्षिणोत्तराभ्यामतसुच्, 'इति सप्तमीपञ्चमीप्रथमान्तात् स्वार्थेऽतसुच् । 'षष्ठ्यतसर्थप्रत्ययेन' इति तद्युक्तात् षष्ठी । अतसर्थप्रत्ययेनेति सप्तम्याद्यन्तात्स्वार्थे यो विहितः स उच्यते ॥

दक्षिणा ग्रामस्य—' उत्तराधरदक्षिणादातिः ' इत्ययमातिः अतसुज्विषये पूर्ववत् ग्रामात् षष्ठी ॥

दक्षिणेन ग्रामम् । ग्रामस्येति वा—' एनबन्यतरस्यामदूरेऽपञ्चम्या ' इत्युत्तरादिभ्यः एनप् प्रत्ययः । अपञ्चम्या इति वचनादयं सप्तमीप्रथमान्तेभ्य उत्तराद्यर्थेऽवधिसापेक्ष इति अवधिमतस्तस्य सामर्थ्यादवध्यपेक्षमदूरत्वम् । अन्यतरस्यां ग्रहणं यथा-

प्रागातमुजाद्यभ्यनुज्ञानार्थम् । इतरथा ह्ययमदूरे बाधकः स्यात् । 'एनपा द्वितीया' इति तद्युक्तात् द्वितीया । षष्ठ्यपीष्यते इति षष्ठी च ॥

दक्षिणा ग्रामात्—'दक्षिणादाच्' इत्याच् एनपो विषये । 'अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' इत्याजन्तयुक्तात् पञ्चमी । अन्य इत्यर्थग्रहणम् । आरादितरर्ते इति स्वरूपग्रहणम् । दिक्शब्दा दिशि दृष्टाः पूर्वादयः । अञ्चूत्तरपदाः प्रागादयः । आजाही प्रत्ययौ । दिक्छब्दत्वादेव सिद्धे अञ्चूत्तरपदग्रहणं अस्तात्यन्तार्थम् ! तत्र हि 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठी विधीयते । एवमाजाह्योरपि ॥

दक्षिणाहि: ग्रामात्—'आहि च दूरे' इत्याहिः पूर्ववदवध्यपेक्षं दूरत्वम् । चकारादाजपि द्रष्टव्यः । सर्वे एते 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययाः ॥

दक्षिणा भवः दाक्षिणात्यः—दक्षिणापश्चात्पुरसस्त्यक्' । इति शैषिकस्त्यक् । दक्षिणाशब्दः पश्चात्पुरोभ्यां साहचर्यादिह अजन्तोऽव्ययो गृह्यते । अत एव सर्वनामत्वाभावात् 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्भावो न भवति ॥

**दीक्षा मौण्ड्येज्योपनयननियमव्रतादेशेषु ॥ ६०० ॥**

दीक्षते इत्यादि ॥

'अनुदात्तेतश्च' इति युचः 'सूददीपदीक्षश्च' इति निषेधात् दीक्षितेति सामान्यस्तृन् ॥